

# राष्ट्रिय संस्कृत संस्थानम्
नवदेहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

॥ १८ ॥

जगन्नाथपण्डितविरचितम्

# रतिमन्मथनाटकम्

सम्पादकः

डॉ॰ जगन्नाथ पाठकः



Rashtriya Sanskrit Sansthan
*( Under the auspices of the Ministry of Education and Culture, Govt. of India )*
**Delhi**

**Ganganatha Jha**
**Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**

*General Editor*
**Dr. G. C. Tripathi**

## No. 18

# RATIMANMATHANĀṬAKAM

*by*

JAGANNĀTHA PAṆḌITA

*Edited by*
**Dr. Jagannath Pathak**




ALLAHABAD
1983

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )
नवदेहली

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला
प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—•—

अष्टादशं प्रसूनम्

# रतिमन्मथनाटकम्

जगन्नाथपण्डित-विरचितम्

—•—

सम्पादकः
डॉ० जगन्नाथ पाठकः

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयागः–२११००२
१९८३

जगन्नाथपण्डित-विरचितम्

# रतिमन्मथनाटकम्

सम्पादकः

डॉ० जगन्नाथ पाठकः




गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयाग-२११००२

१९८३

# FOREWORD

We have a feeling of great satisfaction in presenting to the lovers of Sanskrit a fresh edition of the Sanskrit Drama *Ratimanmathanāṭakam* composed in the first half of the 18th century by Jagannātha Pandit. Jagannatha Pandit was a Mahārashtriyan Brahmin who lived in the City of Thanjaur in the court of Marathas who were ruling in this part of Tamilnadu in the 18th century. The patron of the Jagannatha Pandit was probably the Peshwa Bajirao in whose reign this drama was staged on the occasion of the Ganesha Puja Celebrations in the year 1740 A. D.

Jagannātha Pandit is credited with the authorship of another five works out of which the *Nityotsava* it perhaps the most important one. It was published already in the year 1930 in the Gaekwad Oriental Series, Baroda. This work establishes Jagannātha Pandita as a great scholar of Tantra Shastra, especially of Śrīvidyā. The *Iṣṭa Devatā* of the author was the *Śridevi* or *Tripurasundarī* whose famous temple is situated at Kanchipuram. Jagannatha Pandit was initiated into the worship of *Śridevī* by his Guru Bhāskarānand Nātha on whom he has composed a Kāvya named Bhāskaravilāsa in the year 1742. The Poet was so devoted to the worship of Parāmbā (Highest Mother) or *Śrīdevī* that he not only pays homage to her in the beginning and the end of the present drama, but also turns *Śrīdevī* into an important *dramatis persona* by assingning her significant roles in key-situations.

The story of the *Ratimanmatha-Nāṭakam* as depicted in this drama is unique in its nature in the whole of Sanskrit Literature. An analysis of the plot establishes Jagannātha Pandit as one of the most imaginative and original poet of Sanskrit. Whereas in the Purāṇas, Manmatha, the God of Love, exists after his destruction by Śiva only in an abstract form or in his incarnation as *Pradyumna*,

the son of Lord Krishna, here he is depicted as neither being destructed nor resurrected. He is presented as a young and handsome god still unmarried to Rati whom he loves intensely and whom he tries to achieve. She is, however, abducted by the demon king Śambarāsura whose army is destroyed by *Kartikeya* and who himself is slain later by *Manmatha*. The story with its interesting details has been worked into this play with extraordinary dramatic effect which, I am sure, the scholars shall enjoy.

Though the drama was published once towards the end of 19th century in Bombay in the Grantharatnamālā Series, yet it can now be deemed as non-existent for all practical purposes. The present edition of the drama is based on three manuscripts. One of them, the basic manuscript, has been acquired by this Vidyapeetha in the year 1979/80 under its scheme for the collection and preservation of Sanskrit manuscripts. The second manuscript is preserved in the famous Sarasvati Mahal Library of Thanjaur, the city in which the drama was composed. The third manuscript, which is an incomplete one was procured from the University of Bombay. It has proved to be rather valuable because it contains the Sanskrit rendering of the Prakrit passages. With the publication of a critical edition of this drama, it is now hoped that this work shall regain its proper place in the history of Sanskrit Literature and shall receive the importance that it deserves as an excellent piece of Sanskrit dramatic art.

I am to thank Dr. Jagannatha Pathak, Reader in Sahitya at this Vidyapeetha, most cordially who has completed the task of editing this work in a most magnificent manner and has appended a valuable introduction to this work.

*G. N. Jha Kendriya Sanskrit Vidyapeetha,*
*Motilāl Nehru Park, Allahabad.*

**G. C. Tripathi**
*PRINCIPAL*

# निवेदनम्

जगन्नाथपण्डितेन विरचितस्य रतिमन्मथनाम्नो नाटकस्य प्रस्तुतं संस्करणं यस्यां पाण्डुलिपित्रय्यामाश्रितं तस्याः विवरणं संक्षिप्तं प्रस्तूयते—

## *मूलपाण्डुलिपिग्रन्थः*

इयं प्रतिलिपिः ८२ पत्रपरिमिता, पूर्णा, नागराक्षरमयी, प्रायः शुद्धा। अस्यां प्रतिपृष्ठं नवपङ्क्तयः, प्रतिपङ्क्ति च न्यूनाधिकानि प्रायस्त्रिंशदक्षराणि सन्ति। लिपिकालस्य नास्त्युल्लेखः। इयं हि गङ्गानाथ झा केन्द्रीयसंस्कृतविद्यापीठेन प्रवर्तितायां पाण्डुलिपिसङ्ग्रहयोजनायामस्माभिरुपलब्धा। आरम्भेऽन्ते च, 'श्रीदेव्यै नमः', 'श्रीदेव्यर्पणमस्तु' इति लिखितम्। श्रीदेवी त्रिपुरसुन्दरी राजराजेश्वरी पराम्बा प्रस्तुतग्रन्थकर्तुरिष्टदेवतेति तदीयजीवनवृत्ताकलनेन विदितं भवति।

## 'क' प्रतिलिपिः

प्रतिलिपिरियं (एस० एल० ६४६; एच० डी० ४४६८, तंजौरस्थसरस्वतीमहलग्रन्थागारात् ८९ पत्रपरिमिता ग्रन्थाक्षराणां नागराक्षरेषु परिवर्तनं कारयित्वाऽस्माभिरुपलब्धा। क्वचिदत्र पत्राणां विच्छेदोऽपि गोचरीभूतः। मूलप्रतिलिप्यपेक्षया नातिपरिशुद्धा। अस्यां, समाप्तौ—'युवाविधाने शरदि शरत्कार्तिकशुक्लतृतीयायां भृगुवारे तु लिखितं पुस्तकं त्विदम्। वादरायणगोत्रोत्पन्नस्य जिवाजिपन्तस्येदम्।' इति लिखति।

## 'ख' प्रतिलिपिः

खण्डितरूपेण मुम्बईविश्वविद्यालयात् प्राप्ता। नागराक्षराङ्किता प्रतिलिपिरियं प्राकृतांशस्य संस्कृतच्छायां बिभ्रती महत्वपूर्णा वर्तते। उपरिनिर्दिष्टपाण्डुलिपिद्वयादियमर्वाचीनेव प्रतिभाति। अस्यां आरम्भे पत्रमेकं नास्ति। ततः ३-९९ पत्राणां 'फोटोस्टेटकापी' प्रतिलब्धा। अन्ते च ग्रन्थस्यांशरूपेणेव पराम्बायाः स्तुतिरपि अपूर्णा निबद्धा वर्तते।

प्रथमं मुम्बय्या गोपालनारायण एण्ड कं० द्वारा १८८९-९० खिस्ताब्दे ग्रन्थरत्नमालायां नाटकमिदं प्रकाशितमासीत् । (ग्रन्थरत्नमाला ii पृ० १८३, iv पृ० ९१-१०१) दौर्भाग्येन कृतप्रयत्नैरपि नोपलब्धं संस्करणमिदमस्माभिः ।

## *जगन्नाथपण्डितः*

बालकृष्णाख्यात् पितुर्लक्ष्मीदेव्यामुत्पन्नो महाराष्ट्रदेशस्थो ब्राह्मणः विश्वामित्रगोत्रीयः श्रुतपेटवोपनामा, शाक्तः सप्तदशखिस्ताब्दस्योत्तरार्द्धे समुत्पन्नः कविर्जगन्नाथपण्डितः स्वकीये 'नित्योत्सव' नाम्नि प्रबन्धे स्वपरिचयमेभिः शब्दैः प्रास्तावीत्—

विश्वाश्चर्यतपोमयविश्वामित्रर्षिगोत्रतिलकेन ।
श्रीबालकृष्णविद्वत्सुतेन लक्ष्म्यम्बयोपलाल्येन ।।

श्रुतपेटवोपनाम्ना चोलाधिपभोसलेन्दुमान्येन ।
नाटककाव्यादिकृता महितमहाराष्ट्रजातिहीरेण ।।

त्र्यन्ततत्त्वशीलनदलितजगच्छ(च्छा)त्रजालमोहेन ।
भारत्युपाख्यभास्करमखिदेशिकलब्धनाम्नायम् ।।

आम्नायतन्त्रजालालोकपरेणार्यसम्प्रदायजुषा ।
ललितापदाब्जरोलम्बेन जगन्नाथपण्डितवरेण ।।

कल्यब्देषु रसार्णवकरिवेदमितेष्विह व्यतीतेषु ।
नव्यः क्रोधनशरदि न्यबन्धि नित्योत्सवः शिवप्रीत्यै ।।

'रतिमन्मथे'ऽपि यथा—

अन्येन्द्रं जगदस्थितेन्द्रमपि वा कर्तुं प्रगल्भेऽन्वये
सम्भूतो ननु बालकृष्णसचिवोत्तंसस्य रूपान्तरम् ।
लक्ष्म्यम्बाहृदयाब्धिशीतकिरणो लोकेऽभिगम्यः सता-
मस्ति न्यस्तपदो गुणैरिह जगन्नाथाभिधानः कविः ।।

अत्रैव कामेश्वर इत्याख्यं स्वं गुरुं स्मृतवान् कविरयम् (१।५) । पद्यद्वयेन च स्वकीयमाश्रयदातारं सस्मार (१।६७) । कामेश्वर एव 'कामाक्षी सूरी' इत्यप्यभिहितः (१७००खि०) ।[1]

---

१. न्यू कैटलागस कैटलागरम पृ० ३६० बी, ३६४ बी ।

'नित्योत्सव' प्रबन्धानुसारं जगन्नाथपण्डितस्य दीक्षागुरुर्भासुरानन्दनाथः (भास्कररायदीक्षितः) आसीत् । गृहीतदीक्षः स 'उमानन्दनाथ' इति नाम्ना प्रसिद्धिं गतः ।[1] श्रीदेव्या उपासकः कविरयं 'रतिमन्मथनाटके' स्वस्या इष्टदेवतायाः सश्रद्धं संयोजनञ्चकार इति ग्रन्थस्याकलनेन स्पष्टं भवति । कवेरद्वैतसिद्धान्तपक्षपातोऽप्यत्र स्फुटीभवति ।

पूर्वं कैश्चित् कविरयं नामसाम्येन रसगङ्गाधरकर्त्रा पण्डितराजेन जगन्नाथेनाभिन्न इति भ्रान्तिमूलो विचारः प्रकटित आसीत् । प्रा० रा० ब० आठवलेमहाशयेन श्री० ल० रा० वैद्यमहाशयोक्तमुद्धृत्य 'पण्डितराजजगन्नाथ' इति ग्रन्थे सूचितं यत् बाला जी बाजीराव (१७४०) पेशवा (नाना साहेब) महोदयस्याज्ञानुसारं गणेशोत्सवप्रसङ्गे जगन्नाथपण्डितकृतनाटकस्य मञ्चे प्रदर्शनं जातमिति ।

## *कवेरन्याः कृतयः*

**वसुमतीपरिणयनाटकम्**—एकोजिनाम्नो भोसलावंशशासकस्य प्रभावेण निर्मितम् ।

**शरभराजविलासः**—राजानं शरभोजिमवलम्ब्य १७२२ खिस्ताब्दे रचितः ।

**भास्करविलासः**—स्वगुरुं भास्कररायदीक्षितमवलम्ब्य १७४२ खिस्ताब्दे लिखितः ।

**आर्यास्तवराजः**—भगवन्तं दक्षिणामूर्तिमवलम्ब्य रचितः ।

अस्य कतियानि पद्यानि सदाशिवब्रह्मेन्द्रस्य शिवमानसपूजायां समानान्युपलभ्यन्ते ।

**नित्योत्सवः**—परशुरामकल्पसूत्रस्य पूरकरूपेण बड़ौदाप्राच्यसंस्थानतः गायकवाडप्राच्यग्रन्थमालाया १९३० खिस्ताब्दे प्रकाशितः ए० महादेवशास्त्रिणा च सम्पा-

---

१. द्र० तंजोर सरस्वती महल ग्रन्थमालाया प्रकाशितस्य 'शाहेन्द्रविलासस्य' डॉ० व्ही० राघवमहोदयलिखिता प्रस्तावना, तथा गोविन्दविनायकदेवस्थलीमहोदयानां सी० कुन्हनराजाभिनन्दनग्रन्थे पृ० २७१-८४ प्रकाशितः लेखः ।

दितः । प० क० सूत्रस्य टीकाकारेण रामेश्वरेण सौभाग्योदयाख्यायां टीकायां उमानन्दनाथस्यालोचना कृता । ग्रन्थोऽयमुमानन्दनाथनाम्ना जगन्नाथपण्डितेन १७४५ खिस्ताब्दे लिखित इति कैटलागस कैटलागरम ग्रन्थे निर्दिष्टमस्ति ।

देवीस्तुतिपरं 'अश्वधाटीकाव्यम्' अस्य पौत्रेण लिखितम् ।

## *कथावस्तु*

**प्रथमोऽङ्कः**

कामदेवे वात्सल्यभरितानां रत्याञ्च प्रसादकलितानां मातुः श्रीदेव्याः कटाक्षाङ्कुराणां जगतां कल्याणकारित्वाशंसनरूपे मङ्गलाचरणे प्रस्तुते, नान्द्यन्ते सूत्रधारस्य प्रवेशः । ततः स नटीमाहूय तंजानगरवासिन्यास्त्रिलोकमातुरानन्दवल्ल्या वसन्तोत्सवे दिगन्तेभ्यः समुपसेदुषां विदुषां रसिकानाञ्च मनोरञ्जनार्थं किमपि रूपकं प्रयोक्तव्यमिति चिन्तामात्मनः प्रकटीकरोति, स्वयमेव च जगन्नाथाभिधानस्य कवेर्वाग्विलसितं रतिमन्मथनाटकं स्मरति । अस्मिन्नेव प्रसङ्गे कवेर्वंशस्य गुरोराश्रयदातुश्चोल्लेखं करोति । प्रसङ्गतो वसन्तवर्णनम् । नटी च तस्मिन्नेव कथावस्तुन आधारभूतस्य मन्मथरतिप्रणयप्रसङ्गस्य श्लेषेण निर्देशं करोति । एतदेव सूत्रधार एभिर्वचनैर्विशदीकरोति—'आर्ये सुश्लिष्टमिदमविगीतं तव गीतम्, यदत्र मन्त्रिणा वसन्तेनोदूढकर्तव्यभूयिष्ठधुरतया लघूकृतस्वव्यापारभरो मन्मथो निरन्तरं सुखपरश्च तत्रभवतो रागस्य दुहितरि रत्याञ्च तत्पर इति द्वेधा सूचितमभिधेयम् ।''

एवं प्रस्तावनान्ते, गतदिवसे रथ्यायां सौधपृष्ठे दृष्टाया रत्याः स्मृतिपरवशो मन्मथो विदूषकेन सहालपति । विदूषकं प्रति तेन परस्परमनुरागः प्रकटीकृतः । विदूषकोऽपि तत्सम्बन्धघटनाय निश्चयमात्मनो निवेदयति । ततः स एव प्रेयस्याः संघटनाय नन्दनोद्यानगमनार्थं मन्मथं प्रवर्तयति । मन्मथश्च तेन सह नन्दनोद्यानं गच्छति । रतिरपि रथ्यायां दृष्टचरं तमेव ध्यायन्ती सखीभ्यां सह तत्रोपतिष्ठति । तत्र सहकारफलपातनक्रमेण तयोरन्योन्यसंघटनं भवति । तस्मिन्नेव परस्परं विशिष्टस्य परिचयस्यादानं प्रदानञ्च संजाघटीति । तावत्सर्वे एकत्र स्थिताः परस्परं संलपन्ति तावदेवोपतिष्ठत्येका परिचारिका, जनन्या आदेशं रत्यै सूचयति । तदनुसारं कष्टमनुभवन्ती रतिः सह सखीभ्यां ततो गच्छति । रत्या लाभोपायमनुचिन्तयन् मन्मथः परदेवतायाश्चतुर्थावरणदेवतायाः सर्वार्थसाधिकायाः सचिवस्य वसन्तस्य च स्मरति ।

मध्याह्ने च प्रवृत्ते मन्मथो मन्दाकिनीमवगाह्य माध्यन्दिनं निर्वर्तयितुं निष्क्रामति ।

## द्वितीयोऽङ्कः

द्वे चेट्यौ (मयूरिकाशारिके) प्रविश्य परस्परं रतिमन्मथयोः प्रणयविषये सल्लपतः । द्वयोरपि तयोः पाणिग्रहणमङ्गलविषयेऽपि विमर्शतः । एवं प्रवेशकान्ते, धारागृहगता सखीभ्यामुपचर्यमाणा रतिः प्रविशति । रतिः प्रियविरहेण सचिन्ता तमेव ध्यायन्ती तिष्ठति । सा उपदेशं विहाय प्रकृतानुरूपमाचरितुञ्च सख्यौ प्रवर्तयति । स्वयञ्च विरहव्याकुला तमेव प्रियजनं स्मृतिगतं प्रत्यक्षदृश्यमानमिवानुभवति । स्वहस्तलिखितं प्रियचित्रफलकमपि सारिकया कुतोऽपि निक्षिप्तं न जानाति ।

ततः प्रविशति निजचन्द्रशालावातायनस्थो विदूषकेणान्वास्यमानः सविरहव्यथो मन्मथः । मन्मथो रत्याः सौन्दर्यं प्रशंसति । ततः तदाकृतिं लिखितुकामः कञ्चुकिनं चित्रफलकमानेतुमादिशति । कञ्चुकी किमप्यालेख्यसनाथं चित्रफलकमाहरति । तत्र स्वचित्रमेवालिखितं पश्यति । तस्य चित्रफलकस्य प्राप्तिविषये पृष्टः कञ्चुकी देवोपवनपालकहस्तात् प्राप्तमेतदित्युक्त्वा तद्वचनमुद्धरति-तत्रभवतो रागस्य कन्यागृहपरिचारिकया सारिकयाऽस्मदुपवनसरसस्तीरे निक्षिप्तविस्मृतमिदं मया समासादितमिति । एतेन रत्या लिखितं चित्रमित्याकलय्य तत्रैव तस्याश्चित्रमालिखति । परतश्च सखीभ्यां सह स्थिता रतिर्मन्मथस्य स्वस्मिन्ननुरक्ततामाकलयति । एतच्च भगवत्या योगमाहात्म्येन रथ्यान्तरे परोक्षनिर्वृत्तमपि सर्वं प्रत्यक्षमिव भवति । एवं रतिमन्मथयोरन्योन्यप्रणयः प्रवर्तते ।

ततो वशिनी मन्मथस्य सौधं, रतिविरहखिन्नं मन्मथं तदनुरागख्यापनेन समाश्वासयितुं भगवत्या सर्वार्थसाधिकया प्रेरिता प्रविशति । तं समाश्वास्य च विदूषकाङ्कविभ्रष्टं चित्रफलकं मयूरिकाहस्तेन रत्यै प्रापयिष्यामीति विचार्य निर्गच्छति ।

ततो मयूरिका चित्रफलकहस्ता प्रविश्य रत्यै दर्शयति । मन्मथहस्तलिखितां स्वकीयामाकृतिं निरीक्ष्य रतिः समाश्वसिति । एतस्मिन्नन्तरे सारिका समागत्यार्याया-स्तत्रागमनं सूचयति ।

## तृतीयोऽङ्कः

मन्त्रित्वभारेण सचिन्तस्य वसन्तस्य प्रवेशः । स एवं चिन्तयति—वशिन्याः सकाशात् रतिः स्वामिनि मन्मथेऽतितरामनुरक्तेति श्रुतम् । दित्सिता च रतिः पितृभ्यां

भगवदुपेन्द्रानुप्रहितस्य वाचस्पतेर्वाचा मन्मथाय । किन्तु चरैरेतत्प्रतिकूलवार्तापि निवेदिता । यथा, शम्बरासुरार्थे रतिमर्थयितुं तत्पितुरन्तिकं भार्गवान्तेवासी बाष्कलः समाजगाम । तेन च सौम्यकन्याभिमतो वर एवेष्यतेऽस्मत्कुल इति दत्तनास्तिपर्यायोत्तरो विमना एव प्रतिनिवृत्त इति । अन्यच्च, सम्प्रति शूरपद्मादिभिरसुरैः पराजित इन्द्रो वाचस्पतिना समं सम्मन्त्र्य सेनान्यः प्रादुर्भावाय तुषारगिरौ तपस्यन्तं भगवन्तं शिवं संयोजयितुमेतदलङ्कर्मीणे मन्मथे स्वस्य निधास्यमानभरः सातिशयममून् वासरानस्मिन्नादरं दर्शयति । परं किमत्र चिन्तया, परदेवताप्रसाद एव स्वामिनः श्रेयः समग्रयिष्यति ।

ततः कञ्चुकी प्रविश्य सूचयति—'इन्द्रसमाहूतः स्वामी (मन्मथः) भवन्तं दिदृक्षते ।' ततो वसन्तः कञ्चुकिना सह निर्गच्छति । ततो वसन्तानुगतस्य मन्मथस्य प्रवेशः । मन्मथः, एकत्र स्वस्य रत्याः पाणिग्रहणप्रसङ्गः, अपरत्रावश्यकममरकार्यमापतितमिति स्वीयां दोलायितां मनःस्थितिं प्रकटीकरोति । उभावपि महेन्द्रस्य मन्दिरं प्रविशतः । वाचस्पतिना सह सल्लपतो देवैर्यथोचितमुपास्यमानस्य महेन्द्रस्य प्रवेशः । प्रसङ्गतो महेन्द्रः मन्मथाय कार्यं निर्दिशति—शिवयोरपत्येन समुत्पत्स्यमानेन सुनिग्रहाः श्रूयन्ते शूरपद्मादयो देवारातयः । अतस्तथा प्रयत्यतां वत्सेन यथा प्राञ्चौ दम्पती क्षणमप्यसोढविरहमन्योन्यं संयुज्येयाताम् ।' ततो मन्मथं तत्परमवेक्ष्य महेन्द्रस्तस्यै दिव्यान्याभरणानि वासांसि च वितरति । मन्मथश्च वसन्तेन सह विजयप्रयाणाय निर्गच्छति । ततो महेन्द्रो जङ्घाकरिकांश्चारान् प्रस्थितस्य मन्मथस्य प्रवृत्तिदानायाज्ञापयति । दूतौ ज्ञातवृत्तान्तौ प्रवृतिं निवेदयितुमारब्धवन्तौ । ताभ्यां सविस्तरं प्रस्थानानन्तरं स्थाण्वाश्रमाभ्याशे मन्मथस्य स्थितिं ज्ञात्वा मन्हेन्द्रस्तौ विश्रमार्थं निर्दिशति । एतस्मिन्नन्तर एव प्रतिहारी प्रविश्य प्रचण्डस्याग्नेरुद्गमं वर्णयति । महेन्द्रस्तं त्रिलोचनविलोचनोद्गतं परिकल्प्य व्याकुलो भवति । वाचस्पतिस्तं समाश्वासयति । नेपथ्यतस्तस्याग्नेरमृतेश्वर्या विधूतस्मयस्य निजे स्थाने विलयं श्रुत्वा हर्षमनुभवति । ततश्चरौ प्रविश्य मन्मथविजयं सूचयतः । चरो मन्त्रिणा वसन्तेन वाचस्पतये दत्तं लेखं पत्रिकासम्पुटे प्रस्तौति । वाचस्पतिस्तं वाचयति । चरौ पुनः शैलदुहितुर्गर्भिणीत्वं सूचयित्वा निर्गच्छतः ।

ततः कार्तिकेयस्योत्पत्तिः सूचिता भवति । क्रमशश्च सुरसैनापत्येऽभिषिक्ते तस्मिन् सपत्नेभ्यो नास्माकमातङ्कशङ्केति ज्ञात्वा महेन्द्रः प्रसन्नो भवति । प्रवर्त्यतां मङ्गल्यातोद्यनिस्वनः, आरभ्यताञ्च लास्यमप्सरोभिः' इत्यादिशति च । एतस्मिन्नन्तरे प्रतिहारी प्रविश्य सूचयति—कार्तिकेयप्रादुर्भावमहोत्सवव्यासक्तेषु सर्वेषु रागस्य कन्या रतिरधिसौधं प्रसुप्तैव केनापि मायाविनाऽपहृता न दृश्यते । एतत् श्रुत्वा महेन्द्रेण पृष्टो वाचस्पतिस्तर्कयति—'रतिहेतोः कुमारं प्रति स्पर्धावतोऽसुरस्य शम्बरस्य कर्मणाऽनेन भवितव्य-

मि'ति । महेन्द्रः क्रुद्धो भवति, सेनासन्नाहायाधिकृतान् समाज्ञापयति, रागञ्चाप्तपुरुषमुखेन समाश्वासयति । वाचस्पतिर्वदति—'प्रतिज्ञातपूर्वो हि वधः शम्बरस्य कुमारेण । अतः स एवास्य यशसो भाजनं भवतु ।' महेन्द्रः स्वीकृत्य शत्रोः पार्ष्णिग्राहिभिरस्माभिर्भवितव्यमिति वदति ।

**चतुर्थोऽङ्कः**

रागस्य, मुदितायाः, सख्योः, पुरोहितस्य च प्रवेशः । सर्वेऽपहृतां रतिमनुशोचन्ति । चारणः प्रविश्य सूचयति—रतिं स्वरथमारोप्य सत्वरमपक्रामन्तं शम्बरं सेनया सममनुद्रवति महेन्द्रे शूरपद्मसिंहास्यतारकप्रभृतयो दनुजपतयो महता बलेन मध्येमार्गमवाग्रहीषत । तत एव भगवान् कार्तिकेयस्तत्र समुपस्थितः । युद्धे च सम्प्रवृत्ते सर्वेऽप्यसुराः संहताः । परं पृष्टो कन्याचोरस्य शम्बरस्य वृत्तान्तं 'प्रजवेन रथेन दूरमतिपतन्न दृश्यते स क्व गतो वे'त्यभिधाय स निर्गतः ।

पुनश्च चिन्तापरवशान् सर्वान् समुपसृत्य मयूरिका सूचयति—'भगवत्या निजयोगमाहात्म्येन निर्मितां मायावतीं नाम भर्तृदारिकारूपसदृशीं स्त्रियं शम्बरस्य रथे विनिवेश्य भर्तृदारिका मोचितेति वशिन्या निवेदितम् ।' सैव पार्वतीपरमेश्वराभ्यां दत्तानुज्ञः कुमारमन्मथोऽप्यागच्छतीति सूचयति । सर्वेऽपि भगवत्याः समीपं गन्तुकामा निष्क्रान्ताः ।

ततो रथेन सारथिद्वितीयो मन्मथः प्रविशति । रतिविषयिणीं चिन्तां च करोति । कोकिलकः प्रविश्य तं रत्यपहरणवृत्तान्तं निवेदयति । मन्मथः श्रुत्वा मूर्च्छति, कोकिलकश्च तमाश्वासयति । कोकिलकस्य वचसोत्साहितः स 'अहमेव तस्यासुरतस्करस्य दर्पं व्यपनेष्यामीति प्रतिजानीते । ततो रथेन रिपोर्निकटमुपैति ।

शम्बरस्य रथस्थस्य प्रवेशः । मन्मथो मायावतीमवलोक्य विषण्णो भवति, सरोषञ्च निर्भर्त्सयते । परस्परं युद्धार्थमुभावपि निष्क्रान्तौ । तत आकाशयानेन नारदस्य स शिष्यस्य प्रवेशः । उभावपि वर्णनपुरःसरं मन्मथशम्बरयोर्युद्धं पश्यतः । शम्बरं हत्वा प्राप्ते च मन्मथेन विजये द्वावपि महेन्द्रमुपेन्द्रञ्चोदन्तश्रावणेनानन्दयितुं निर्गतौ ।

**पञ्चमोऽङ्कः**

विजयमधिगत्य मन्मथो मायावत्या सह प्रविशति । मायावती भीतभीतेव

तिष्ठति। मन्मथस्य मनसि मायावतीं प्रति सन्देह इवोदेति। ततो मन्मथो रागस्य गृहमुपसर्पति। तत्र रत्या पितृभ्या तस्याः सखीजनेनोपास्यमाना सर्वार्थसाधिका वशिनी च मिलतः। तत्र रतिं दृष्ट्वा मन्मथः स्वकीयं भ्रान्तिविलसितमुदीरयति। रतिरपि मन्मथस्य पार्श्वे मायावतीं दृष्ट्वा विस्मितस्तिमिताऽवतिष्ठते। मायावत्यपि रतिमवलोक्य केयमिति जिज्ञासापरवशा भवति। सर्वार्थसाधिका मुदितारागौ प्रति वक्ति 'एषा खलु मायावती नाम, वत्सां रतिमसुराधमादपवाहयितुं मया योगप्रभावनिर्मिता धर्मतो वां दुहितैव। सर्वे च मायावतीं स्वीकुर्वन्ति।

परतश्च महासेनस्य कार्तिकेयस्य देवसेनेन्द्रसेनाभ्यां सार्धं विवाहमङ्गलं प्रवर्तते। रतिमायावत्योश्च विवाहोऽपि सम्पन्नो भवति। विवाहानन्तरं सविनयमुपसृत्य मन्मथः सर्वार्थसाधिकायाः पादावुपसंगृह्णाति। सर्वार्थसाधिका सिंहासनेश्वर्या निदेशमिमं प्रकाशयति—'निर्वृत्ते परिणयोत्सवे वत्सं मन्मथं निजसन्दर्शनावसरदानेन कृतार्थयिष्य इति। ततः सर्वार्थसाधिका सभार्यं मन्मथमम्बायास्त्रिपुरसुन्दर्या मन्दिरमानयति। ततः प्रविशति सिंहासनगतस्य कामेश्वरस्याङ्कं परिष्कुर्वाणा देवी विभवतश्च परिवारः। मन्मथः श्रीमातरं स्तौति। पर्यन्ते, भरतवाक्येन मन्मथः कामनामभिव्यनक्ति।

## *आधारभूता कथा*

श्रीमद्भागवतानुसारं (१०।५५), कामदेवः खलु भगवतो वासुदेवस्यांशभूतो देवविशेषः। स स्वमंशिरूपं वासुदेवमेवाश्रित्य रुक्मिण्या गर्भतः प्रादुरासीत्, सर्वथा च स्वपितुः समान एव जातः प्रद्युम्न इत्याख्यां भेजे। तं शम्बरनामाऽसुरो वेशं परिवर्त्य सूतिकागृहादेव हृत्वा समुद्रे च निक्षिप्तवान्। असुरेण तेन पूर्वमवज्ञातं, स (प्रद्युम्नः) तस्य भावी शत्रुरिति। समुद्रे कश्चित् महामत्स्यः तं बालकं निगीर्णवान्। धीवरैः सोऽपि मत्स्यो मत्स्यैरन्यैः सह गृहीतः, शम्बरासुराय च समर्पितः। महानसस्थैः सूपकारैर्मत्स्यस्योदरात् निर्गतो बालकः शम्बरासुरस्य दास्यै मायावत्यै समर्पितः। मायावत्या मनसि शङ्का समुत्पन्ना। ततः सा नारदात् तस्य बालकस्य कामदेवत्वं तदुत्पत्तिं मत्स्योदरे च गमनं श्रुतवती। मायावती तावदासीत् कामदेवस्य पत्नी तदुत्पत्तिं प्रतीक्षमाणा रतिरेव। शम्बरासुरेण सा स्वकीये महानसे दासीत्वेन नियुक्ताऽऽसीत्। तं बालकं, स्वपतिरिति मत्वा प्रेमपरायणा सती सिषेवे। सुभगः प्रद्युम्नः प्राप्तवयाः सन् स्वस्मिन् मायावत्या भावपरिवर्तनं दृष्ट्वा तां पप्रच्छ। ततः सा सर्वमपि वृत्तान्तमुक्तवती। मायावती सर्वविधमायानाशकारिणी महामायेति विद्या प्रद्युम्नाय दत्तवती। ततः प्रद्युम्नः शम्बरासुरं सङ्गरायाहूतवान्। शम्बरासुरेण गदा प्रहृता, सा च प्रद्युम्नेन

स्वगदया निपातिता। ततः सोऽसुरो माययाऽऽकाशतः शरधाराख्यं प्रहारमारेभे। प्रद्युम्नः सत्त्वमयीं महामायाख्यां विद्यां प्रयुक्तवान्। पर्यन्ते प्रद्युम्नः शम्बरासुरस्य शिरश्चिच्छेद। मायावती नभोमार्गत् प्रद्युम्नं द्वारकापुरीमानीतवती।

श्रीविष्णुपुराणानुसारं (अध्याय २७) कथेयमस्ति–शम्बरासुरो जातमात्रं-षष्ठेऽह्नि 'ममैष हन्ते'ति सूचिकागृहात् हृत्वा लवणार्णवे चिक्षेप। तत्र तं बालकमेको मत्स्यो जग्राह। धीवरैरन्यमत्स्यैः सह सोऽपि घातितः शम्बराय निवेदितश्च। शम्बरस्य मायावतीनाम्नी पत्नी सूदानामाधिपत्यं बिभ्राणा दग्धस्य मन्मथतरोः प्रथमाङ्कुरं कुमारं ददर्श। विस्मितां तामुपगत्य नारदस्तस्य बालकस्योदन्तं सूचयमास। नारदस्योपदेशेन सा तं शिशुं पालयामास। प्राप्ते च तस्मिन् यौवनं सा साभिलाषा बभूव। प्रद्युम्नाय तस्यै सा सर्वा मायाः शिक्षितवती। तस्याः स्वस्मिन् कामप्रगुणां वृत्तिमाकलय्य प्रद्युम्नस्तां तच्चेष्टितविषये पप्रच्छ। ततः सा सर्वं निवेदितवती। इत्युक्तः स शम्बरं समाह्वयत्। तस्य सैन्यमशेषं हृत्वा सप्त माया व्यतिक्रम्य प्रद्युम्नोऽष्टमीं मायां प्रयुज्य तं हतवान्। ततस्तया मायावत्या सार्धं पितुः श्रीकृष्णस्य पुरमाजगाम। नारदेन सहागत्य श्रीकृष्णो रुक्मिणीं सर्वं सूचयामास। मायावत्या विषये च तेनोक्तम्—इयं रतिर्मन्मथे नष्टे (शिवनेत्राग्निना) मायारूवतीपेण शम्बरं मोहयामास। काम एव त्वत्पुत्ररूपेणावतीर्णः, तस्येयं भार्या रतिरेव। एवं हरिवंशपुराणे ( विष्णुपर्व, अ० १०६-१०७ ) कामदेवसम्बद्धा कथोपलभ्यते।

ऋग्वेदीयदशममण्डलान्तर्गते (१०।१२९) 'नासदीये'त्याख्येऽत्यन्तमुदात्ते, आधिक्येन चामूर्ते सूक्ते निर्दिष्टम्-प्रथमं सर्वतः शून्यमासीत्, कस्यचिदप्यस्तित्वं नासीत्। अन्धकारेण महाशून्येन चाविभेद्यं जलमावृत्तमासीत्। तदानीमेव 'तपसा' आद्यं तत्त्वं ('एकम्') उत्पन्नम्। तदनन्तरं मनसः सर्वप्रथमबीजरूपः काम उत्पन्नः ( कामस्तदग्रे समवर्तताधि )। अयमेव सदसतोर्मध्ये शृङ्खलेवाभूत्। तदुद्भवत एव देवा उत्पन्नाः। प्रजापतिस्तस्य 'कामस्य' मानवत्वरोपितः प्रतिनिधिः।

अथर्ववेदे कामस्य दैवीकरणं जातम् ( ९।२,९।५२ )। अत्र नायं प्रेम्णो देवः, परं अभिलषितानां पूरको देव इति वर्णितः। अस्य हृदयवेधकराणां बाणानामप्युल्लेखो वर्तते। प्रथमं जन्मगृहीतृत्वेनायं वर्णितः ( ९।२ )।

कविना जगन्नाथपण्डितेनाधारभूतां कथामिमां महता कौशलेन परिवर्त्य रतिमन्मथनाम्नो नाटकस्य कथावस्तु प्रणीतमिति प्रतिभाति। मन्मथस्य रत्याश्चान्योन्य-

प्रणयप्रसङ्गः, देवैः स्वकार्यार्थं शिवस्य पार्वत्या सह संयोजनार्थं मन्मथस्य प्रयोगः, तस्य साफल्यं, कुमारोत्पत्तिः, कुमारकृतोऽसुराणां संहारः, शम्बरासुरेण रत्या अपहरणं, देव्या च रत्याः स्थाने मायावत्याः स्थापनं मुदितारागयो रतिपित्रोः पुत्र्या विषये व्याकुलीभावः पर्यन्ते च मन्मथेन सह शम्वरस्य सङ्ग्रामः, रत्या मायावत्या च सह सङ्गमः, श्रीदेव्या श्चाशीरित्येतत्सर्वमपि सर्वथा भिन्नमपि कथावस्तु स्वाधारभूतकथायां कविकृतं कौशलेन परिवर्तनं स्फुटीकरोति । अस्मिन् परदेवताया निजयोगमाहात्म्यमेव कथावस्तुनो गतिशीलतायां साहायकमाचरति ।

कविना नाटकस्यास्य वस्तुयोजनायां नाट्यशास्त्रनिर्दिष्टा नियमाः पालिताः। एतच्च नाट्यशास्त्रीयमाकलनं कृतवतामग्रतः स्वयमेव परिस्फुटं भविष्यतीति कृत्वाऽस्मिन् प्रसङ्गे नास्माभिर्विस्तरेण निर्दिश्यते ।

मन्मथस्य धीरललितनायकत्वं स्फुटमेव । समग्रेऽपि नाटके शृङ्गारस्य प्राधान्यं परिलक्ष्यत एव । यत्रकुत्रापि वीरस्य, भयानकस्य, नारदप्रसङ्गे च हासस्य समुल्लासोऽपि कविकृताया रसयोजनायाः साफल्यमभिव्यनक्ति । सर्वमप्येतत् सहृदयैरस्य नाटकस्य परिशीलनं स्वस्वदृष्ट्या स्वयमेव विधास्यत इति कृत्वा नास्माभिः किञ्चिदस्मिन् प्रसङ्गे विस्तरेणोक्तम् । कामस्य रत्या रागस्य मुदितायाश्च संयोजनेन नाटकमिदं 'एलेगोरिकल'परम्परायां यत्किञ्चिल्लिखितं प्रतीयते ।

## *त्रिपुरसुन्दर्याः स्वरूपम्*

"शाक्ताद्वैतमतेऽनन्तस्य विश्वस्याधिष्ठानभूतः शुद्धबोधस्वरूपः प्रकाश एव शिवतत्त्वमिति स्वीक्रियते । तस्मिन् प्रकाशे यो हि विमर्शः स एव शक्तिरिति ख्यायते । प्रकाशं विना विमर्शः, विमर्शं विना प्रकाशश्च नावतिष्ठते । वेदान्तिनां मते विमर्शं विनाप्यनन्तो निर्विकल्पः प्रकाशोऽवतिष्ठते, परन्तु शाक्ताद्वैतिनां दृष्ट्या तु विमर्शः सर्वदाऽवतिष्ठते । किञ्चान्यत्, सत्यामपि महावाक्यजन्यायां परब्रह्माकारवृत्तौ, आवरकेऽज्ञाने निवृत्तेऽपि स्वयंवृत्तिरूपो विमर्शस्तिष्ठत्येव । वृत्तिरूपया विद्यया संश्लिष्ट एवानन्तप्रकाशस्वरूपः शिवः सदा विराजते । विमर्शरूपायाः प्रकाशशक्तेः प्रवेशेन बिन्दोरुत्पत्तिर्भवति । द्वयोरेकीभाव एवार्धनारीश्वरतां भजते । अनयोः परस्परासक्तिरेव कामः । श्वेतबिन्दुः पुंस्त्वस्य, रक्तबिन्दुश्च स्त्रीत्वस्य परिचायकौ । द्वयोर्मेलने कामकलाया उत्पत्तिः । 'अ' इति शिवस्य प्रतीकतां 'इ' इति शक्तेः प्रतीकतां भजते । इयं 'त्रिपुरसुन्दरी' अहमित्यनेन व्याप्ता ।"

प्रसङ्गेऽस्मिन् 'नित्योत्सव'नाम्नि प्रबन्धे उमानन्दनाथोपाह्वेन श्रीजगन्नाथ-पण्डितेन पराम्बायाः श्रीत्रिपुरसुन्दर्या या स्तुतिः कृता साऽऽस्वाकलनीयेत्युद्ध्रियते—

"जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥

पिता माता भ्राता गुरुरथ सुहृद्बान्धवजनः
प्रभुस्तीर्थं कर्माविकलमिह चामुत्र च हितम् ।
विशुद्धा विद्या वा पदमपि च तत् प्राप्यमसि मे
त्वमेव श्रीमाता स्वपिमि गतशङ्कः सुखतमः ॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥

हे सद्रूपिणि हे चिदर्चिरुदये हे कामराजप्रिये
हे भण्डासुरहन्त्रि हेऽद्भुतनिधे हेऽनङ्गसञ्जीविनि ।
हे विश्वप्रसवित्रि हे सकरुणे हे दीनरक्षामणे
हे श्रीमल्ललिताम्ब हे परशिवे मां पाहि डिम्भं निजम् ॥

नमो हेमाद्रिस्थे शिवसति नमः श्रीपुरगते
नमः पद्माटव्यां कुतुकिनि नमो रत्नगृहगे ।
नमः श्रीचक्रस्थेऽखिलमयि नमो बिन्दुनिलये
नमः कामेशाङ्कस्थितिमति नमस्तेऽम्ब ललिते ॥

जय जय जगदम्ब भक्तवश्ये
जय जय श्रान्तकृपावशान्तरङ्गे ।
जय जय निखिलार्थदानशौण्डे
जय जय हे ललिताम्ब चित्सुखाब्धे ॥

षडङ्गदेवता नित्या दिव्याद्योघत्रयीगुरून् ।
नमाम्यायुधदेवीश्च शक्तीश्चावरणस्थिताः ॥
पद्मावत्यम्बिकाधीनवामाङ्काय शिवात्मने ।
भासुरानन्दनाथाय मम श्रीगुरवे नमः ॥

## प्रस्तुतं संस्करणम्

यथा च निर्दिष्टमस्माभिः, रतिमन्मथस्य संस्करणमिदं पाण्डुलिपित्रयाश्रितमिति। पूर्वप्रकाशितात् संस्करणात् कियदस्मिन् वैशिष्ट्यं वेति तदुपलब्धेरेव स्फुटीभविष्यति। मूलग्रन्थः कियता च साफल्येन सहृदयानां पुरः स्वस्वरूपेण स्थापित इत्यत्रापि निर्णये त एव प्रमाणम्। यद्यपि मुम्बईतः प्राप्ते खण्डिते ख-पाण्डुलिपिग्रन्थे नाटकस्य प्राकृतांशस्य संस्कृतच्छायाऽपि सुलभाऽभूत्, तथापि तस्य समग्रतया नोपलब्धेरस्माभिरेव यथामति संस्कृतच्छायांशो नियोजितः। यत्रकुत्रापि निर्णेतुमशक्नुवद्भिः प्रश्नचिह्नद्वारा सहृदयेषु विद्वत्सु निर्णयस्य भारो निक्षिप्तः।

प्रसङ्गस्यैकस्य चर्चां विशेषेणात्र चिकीर्षामि। मुद्रितग्रन्थस्य अष्टमपृष्ठे विदूषकस्य वचनम्—'वअस्स, कामुअस्स अप्पा हि मदेव्वअबला अच्चरत्ति आभाणओ लोअस्स।' इति वाक्यमिदं मया मूलपुस्तके पठितम्। अस्य वाक्यस्य संस्कृतच्छायां निर्णेतुमशक्नुवता मया प्राकृतभाषायाः सुप्रसिद्धा मर्मज्ञाः श्रीहरिवल्लभभायाणीमहोदयाः (अहमदाबादस्थाः) पत्रद्वारा पृष्टाः। तैर्वाक्यमिदमेवं पठितम्—'वअस्स, कामुअस्स सव्वा हि सदेव्व अबला अच्छर त्ति आभाणओ लोअस्स।' संस्कृतच्छाया 'वयस्य, कामुकस्य सर्वा हि सदैव अबला अप्सरा इति आभाणको लोकस्य।' नास्त्यत्र सन्देहो यत् भायाणीमहोदयाः सर्वथा स्वनिर्णये प्रमाणभूताः, किन्तु 'अप्पा' इत्यस्य 'सर्वाः' इति परिवर्तने यत्किञ्चित् काठिन्यमुपतिष्ठतीति कृत्वाऽस्मदीया शंका सर्वथा न निराकृतेति तस्मिन् स्थाने प्रश्नचिह्नं निक्षिप्तम्। एवमन्येष्वपि स्थलेषु मयाऽप्रतिविधीयमानेन सन्देहो निर्दिष्टः। सहृदया विद्वांसस्तत्सर्वं संशोध्य पठिष्यन्तीत्याशासे।

नाटकेऽस्मिन् स्वकीयाभिप्रेतस्याद्वैतसिद्धान्तस्य पक्षपातः, श्रीदेव्याश्च माहात्म्यं च कविना निर्दिष्टम्। पराम्बा श्रीदेवी राजराजेश्वरी त्रिपुरसुन्दरी, अद्वैतसिद्धान्तव्याख्यातृणामाद्यशङ्कराचार्याणामुपास्येति सर्वेषामेव तदनुगतानामुपास्येति सर्वमपि सम्बद्धग्रन्थाकलनेन विद्वद्भिः परिशीलनीयम्।

## कृतज्ञताज्ञापनम्

अस्य नाटकस्य 'विद्यापीठतः' प्रकाशनं निर्णीय मयि सम्पादनस्य भारं निक्षिप्तवतां पौरस्त्यपाश्चात्योभयदृष्ट्या गीर्वाणवाण्याः समाकलने प्राप्तवैदग्ध्यानां सहृदयधुरीणानां प्राचार्याणां डॉ० गयाचरणत्रिपाठिवर्याणां महीयसीं कृपादृष्टिमेवमाकलय्य तान् प्रति हार्दिकी कृतज्ञतेयं निवेद्यते। यद्यस्मिन् प्रसङ्गे दिल्लीस्थ' राष्ट्रियसंस्कृतसंस्थानस्य'

मान्या निदेशकाः सहृदयेषु विद्वत्सु च परमादरास्पदीभूताः श्रीमन्तो डॉ० रामकरणशर्म-महाभागाः सश्रद्धं स्मर्यन्ते तदा सर्वथौचित्यमेव, यतस्तेषां निदेशकत्वे 'राष्ट्रियसंस्कृत-संस्थानस्य' दिनानुदिनं सर्वाङ्गीणोऽभ्युदय एव परिलक्ष्यते। यथासमयं स्वकीयेन सद्भाव-कलितेन परामर्शेनानुगृह्णन्तः सुहृद्वरा डॉ० किशोरनाथझा महोदया अप्यस्मिन् प्रसङ्गेऽस्माकं धन्यवादस्य भाजनं सन्ति। अपेक्षितानां पाण्डुलिपिग्रन्थानां सुलभीकरणे सततं जागरूकेभ्यः संग्रहाध्यक्षेभ्यः **श्री जीवेश्वर झा** शर्मभ्योऽप्यस्माकं धन्यवादाः। पर्यन्ते, तत्परतया नाटकस्यास्य मुद्रणं कृतवन्तः शाकुन्तलयन्त्रालयस्याध्यक्षाः श्रीमदुपेन्द्र-त्रिपाठिनोऽपि धन्यवादार्हाः।

प्रयागः
१८-१०-८२

*जगन्नाथपाठकः*



# पात्राणि

## पुरुषाः

सूत्रधारः — नाटकस्य प्रबन्धकः ।

मन्मथः — महेन्द्रस्य भ्रातृजः, उपेन्द्रस्य पुत्रः, नाटकस्य नायकः ।

विदूषकः — मन्मथस्य सुहृत्, सांख्यायननामा ।

कञ्चुकी — मन्मथस्यानुचरः ।

वसन्तः — मन्मथस्य सचिवः ।

महेन्द्रः — देवराज इन्द्रः ।

वाचस्पतिः — देवानां गुरुः ।

जाङ्घिकौ — वार्ताहरौ ।

दौवारिकः — महेन्द्रस्य द्वारपालः ।

रागः — रत्याः पिता ।

चारणः — कुमारजयन्तस्य वार्ताहरः ।

कोकिलकः — वार्ताहरः ।

सारथिः — मन्मयस्य रथचालकः ।

शम्बरः — असुरः ।

प्रतिहारी — महेन्द्रस्य चरः ।

नारदः — कलहप्रियो मुनिः ।

शिष्यः — नारदस्यान्तेवासी ।

## स्त्रियः

नटी — सूत्रधारस्य गृहिणी ।

रतिः — रागस्य मुदितायाश्च पुत्री, नाटकस्य नायिका ।

कोकिलवाणी
कीरवाणी } — रत्याः सख्यौ ।

परिचारिका — रत्या भवनस्य दासी ।

मयूरिका
सारिका } — रागस्य कन्यगृह-परिचारिके ।

श्रीमाता — सिंहासनेश्वरी त्रिपुरसुन्दरी ।

सर्वार्थसाधिका — एका श्रीदेव्या आवरणदेवता ।

वशिनी — भगवत्याः प्रियान्तेवासिनी ।

मुदिता — रत्या माता ।

मायावती — रत्या रूपान्तरम् ।



जगन्नाथपण्डित-विरचितम्

# रतिमन्मथनाटकम्

## प्रथमोऽङ्कः

साकूताः शशिशेखरे सुरसरित्याविष्कृतानादराः
स्मेरा भृङ्गिरिटावनन्यशरणे दीने दयामेदुराः।
वात्सल्यप्रचुराः प्रसूनविशिखे रत्यां प्रसादोत्तराः
कल्याणानि तरङ्गयन्तु जगतां मातुः कटाक्षाङ्कुराः ॥१॥

*( नान्द्यन्ते )*

सूत्रधारः — *( नेपथ्याभिमुखमवलोक्य )* आर्ये, सन्निधेहि तावत्।

*( प्रविश्य )*

*नटी* — अज्ज, एसम्हि णिओअणिज्जा। [*आर्य, एषाऽस्मि नियोजनीया*]

---

मूलपाण्डुलिपिग्रन्थस्य प्रथमपृष्ठे लिखितं वर्तते---श्रीदेव्यै नमः। जगन्नाथपण्डितकृतिरिदं रतिमन्मथं नाम नाटकम्। श्रीरस्तु। तस्यैव द्वितीये पृष्ठे ग्रन्थारम्भात् पूर्वं लिखति—श्रीदेव्यै नमः। श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः। श्रीः। तंजौरस्थपाण्डुलिपिग्रन्थे लिखति—श्रीगुरुभ्यो नमः। श्रीमन्मथजीवातवे ईश्वराङ्कनिलयायै शिवायै नमः।

# पात्राणि

## पुरुषाः

सूत्रधारः — नाटकस्य प्रबन्धकः ।

मन्मथः — महेन्द्रस्य भ्रातृजः, उपेन्द्रस्य पुत्रः, नाटकस्य नायकः ।

विदूषकः — मन्मथस्य सुहृत्, सांख्यायननामा ।

कञ्चुकी — मन्मथस्यानुचरः ।

वसन्तः — मन्मथस्य सचिवः ।

महेन्द्रः — देवराज इन्द्रः ।

वाचस्पतिः — देवानां गुरुः ।

जाङ्घिकौ — वार्ताहरौ ।

दौवारिकः — महेन्द्रस्य द्वारपालः ।

रागः — रत्याः पिता ।

चारणः — कुमारजयन्तस्य वार्ताहरः ।

कोकिलकः — वार्ताहरः ।

सारथिः — मन्मथस्य रथचालकः ।

शम्बरः — असुरः ।

प्रतिहारी — महेन्द्रस्य चरः ।

नारदः — कलहप्रियो मुनिः ।

शिष्यः — नारदस्यान्तेवासी ।

## स्त्रियः

नटी — सूत्रधारस्य गृहिणी ।

रतिः — रागस्य मुदितायाश्च पुत्री, नाटकस्य नायिका ।

कोकिलवाणी
कीरवाणी } — रत्याः सख्यौ ।

परिचारिका — रत्या भवनस्य दासी ।

मयूरिका
सारिका } — रागस्य कन्यगृह-परिचारिके ।

श्रीमाता — सिंहासनेश्वरी त्रिपुरसुन्दरी ।

सर्वार्थसाधिका — एका श्रीदेव्या आवरणदेवता ।

वशिनी — भगवत्याः प्रियान्तेवासिनी ।

मुदिता — रत्या माता ।

मायावती — रत्या रूपान्तरम् ।



जगन्नाथपण्डित-विरचितम्

# रतिमन्मथनाटकम्

## प्रथमोऽङ्कः

साकूताः शशिशेखरे सुरसरित्याविष्कृतानादराः
स्मेरा भृङ्गिरिटावनन्यशरणे दीने दयामेदुराः।
वात्सल्यप्रचुराः प्रसूनविशिखे रत्यां प्रसादोत्तराः
कल्याणानि तरङ्गयन्तु जगतां मातुः कटाक्षाङ्कुराः ॥१॥

*( नान्द्यन्ते )*

**सूत्रधारः** — *( नेपथ्याभिमुखमवलोक्य )* आर्ये, सन्निधेहि तावत्।

*( प्रविश्य )*

**नटी** — अज्ज, एसम्हि णिओअणिज्जा। [*आर्य, एषाऽस्मि नियोजनीया*]

---

मूलपाण्डुलिपिग्रन्थस्य प्रथमपृष्ठे लिखितं वर्तते—श्रीदेव्यै नमः। जगन्नाथपण्डितकृतिरिदं रतिमन्मथं नाम नाटकम्। श्रीरस्तु। तस्यैव द्वितीये पृष्ठे ग्रन्थारम्भात् पूर्वं लिखति—श्रीदेव्यै नमः। श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः। श्रीः। तंजौरस्थपाण्डुलिपिग्रन्थे लिखति—श्रीगुरुभ्यो नमः। श्रीमन्मथजीवातवे ईश्वराङ्कनिलयायै शिवायै नमः।

*सूत्रधारः* — आर्ये, नन्वस्यास्तञ्जान[1]गरकञ्जातकलहंससुदृशो भावुकजनभावुकवितरणकल्पवल्ल्यास्त्रिलोकमातुरानन्दवल्ल्यास्तावद् वसन्तोत्सवे ससन्तोषमशेषदिगन्तोपसेदुषाममीषां रसिकविदुषामनुरञ्जनानुरूपं किमिव रूपकमिति निरूपयतोऽपि चिराय[2] न विश्राम्यति मे चेतः ।

*नटी* — अज्ज, संतेसु वि सअललोअहिअआणंदणधुरंधरेसु विविहेसु णिवंधणेसु किंति पज्जाउलं अज्जस्स माणसं ? [*आर्य, सत्स्वपि सकललोकहृदयानन्दनधुरन्धरेषु विविधेषु निबन्धनेषु किमिति पर्याकुलमार्यस्य मानसम् ?*]

*सूत्रधारः* — आर्ये, शृणु तावत्—

शब्दाडम्बरसस्पृहाः कतिपये केऽप्यर्थचित्रैषिणः
केचित्तद्द्वितयोत्सुका[3] वशयितुं शक्याः प्रवाचा ह्यमी ।
ये तावद् रसिका रसोत्तरगुणग्रामाभिरामां परं
श्लाघन्ते भणितिं भवेन्न सुकरं तेषां समाराधनम् ॥२॥

किञ्च,

नवनवसुदृग्विलासैर्ननूत्सुकाः कामिनो यथाऽनुदिनम् ।
एवमपूर्वासु कृतिष्वादरवन्तो हि रसयितारः ॥३॥

*नटी* — ( *सचिन्तम्* ) किं णाम तारिसं[4] होवु ? [ *किं नाम तादृशं भवतु* ]

*सूत्रधारः* — ( *स्मृतिमभिनीय, सानन्दम्* ) हन्त, निजनाभिगतमेव सौरभमविज्ञाय परितो मृगयमाणस्य तदुद्भवं मृगनाभिमृगस्य

---

१. क °स्तंजन° । २. ख सुचिरं । ३. ख केचित्राद्विपो (?) । ४. क तारिसो ।

पदवीमदवीयसीं कृतवतो मे नैपुण्यम्[1], यदत्र कण्ठवर्तिन्यपि सुवर्णाभरणे निखिलगुणशृङ्गाटके रतिमन्मथनाम्नि नाटकेऽन्यतो गवेष्यते ।

*नटी* — ( सकौतुकम् ) कहेदु अज्जो कस्स कइणो ईरिसं वा[2]आविलसिदंति ? [ *कथयत्वार्यः, कस्य कवेरीदृशं वाग्विलसितमिति ?* ]

*सूत्रधारः* — ( सपरितोषम् ) आर्ये, दीयतामवधानम् ।

**अन्येन्द्रं जगदस्थितेन्द्रमपि वा कर्तुं प्रगल्भेऽन्वये**
**सम्भूतो ननु बालकृष्णसचिवोत्तंसस्य रूपान्तरम् ।**
**लक्ष्म्यम्बाहृदयाब्धिशीतकिरणो लोकेऽभिगम्यः सता-**
**मस्ति न्यस्तपदो गुणैरिह जगन्नाथाभिधानः कविः ॥४॥**

*नटी* — ( सगौरवम् ) अज्ज, तह महाकु[3]लीणो णं एसो ! [*आर्य, तथा महाकुलीनो नन्वेषः !* ]

*सूत्रधारः* — अथ किम् !

*नटी* — अज्ज, मुणामि से देसिएहिं वि महप्पेहिं[4] होदव्वं । [ *आर्य, जानामि तस्य दैशिकैरपि माहात्म्यैर्भवितव्यम्* ]

*सूत्रधारः* — (सश्लाघम्) आर्ये[5], निपुणमुपन्यस्तम् ।

**जिह्वारङ्गस्थवाणीनखविहतिरणद्वल्लकीनादभेदै-**
**र्द्दग्लीलाधीनलक्ष्मीकरकमलमधुस्वादिमाद्वैतवादैः ।**

---

१. क नैपुणम् । २. ख ईरिसं एदं वा° । ३. क माहाकु° । ४. क महप्पेवेहिं ।
५. क, ख 'आर्ये' इति नास्ति ।

चेतःक्रीडन्मृडानीकचभरकलितामन्दमन्दारगन्ध-
प्रख्यामोदैर्वचोभिः सुरभिरिह गुरुः सैष कामेश्वरोऽस्य ॥५॥

*नटी* — *( सशिरःकम्पम् )* अज्ज, कदरस्स रण्णो अण्णाधुरीणो एसो ? [ *आर्य, कतरस्य राज्ञ आज्ञाधुरीण एषः ?* ]

*सूत्रधारः* — *( सबहुमानम् )*

अस्त्याधारधुरन्धरः स्वशरणायातस्य नीरन्ध्रता-
दुर्भेदो मधुपव्रजेन गुणवन्नित्योपजीव्योच्छ्रयः ।
वंशो भोसल[1]भूभृतोऽधिवसुधं चोलप्रदेशार्पित-
स्फूर्जन्निर्मलकीर्तिमौक्तिकमणीहारात्मकालङ्कृतिः ॥६॥

तस्मिन्[2] विस्मयनीयशीलसदनं संग्रामलीलातत-
ज्या[3]चक्रीकृतचापदर्शननमत्प्रत्यर्थिपृथ्वीपतिः ।
अश्रान्तप्रतिपादनामृतझरीनिर्वापितार्थिव्रजा[4]-
किञ्चन्यो[5]दुधुरसंज्वरो भुवि जयत्येकावनीचन्द्रमाः ॥७॥

स तावद् राजशिरोमणिरुपजीव्यते तेन[6] जगता च सर्वेण ।

*नटी* — *( सवितर्कम् )* अज्ज, अण्णं दाव जाणिदव्वं अत्थि मे, जं क्लि सअलकलाकलावमंडिदा वि एसा पंडिदमंडली कहं अम्हेहिं परितोसणिज्जत्ति । [ *आर्य, अन्यत् तावज्ज्ञातव्यमस्ति मे, यत्किल सकलकलाकलापमण्डिताप्येषा पण्डितमण्डली कथमस्माभिः परितोषणीयेति* ]

*सूत्रधारः* — आर्ये, कृतमाशङ्कया । इयमेव महतां शैली, यदन्यदीयस्य गुणपरमाणोरपि पर्वतीकरणम् । प्रतीपा पुनरन्येषाम् । पश्य,

---

१. ख सोसल° । २ क यस्मिन् । ३. ख °ज्जा° । ४. क °द्विजा° ।
५. क °किञ्चिन्यो° । ६. क तेनन ।

धारा अपि धाराधरगलिता अब्धव्यभावमुपयान्ति ।
रत्नाकरे तु दधते दम्भा अपि विप्रुषो मणीरूपम्[1] ॥८॥

*नटी* — ( *सहर्षसम्भ्रमम्* ) अज्ज, संपण्णाए वि एरिसीए सामग्गीए किंति सभाअणसभाअणे विलंबीअदि ? [ *आर्य, सम्पन्नायामपीदृशि सामग्र्यां किमिति सभाजनसभाजने विलम्ब्यते ?* ]

*सूत्रधारः* — आर्ये, तदिममेव सन्निहितमुल्लसन्तं सुमनःसम्पदा वसन्तं विषयीकृत्य सङ्गीतिरङ्गीक्रियताम् । अधुना हि,

कीराणामुदितं कलैः पिकमुखात् प्रोदञ्चितं पञ्चमैः
स्वैरं चन्दनशैलकन्दरभवैर्मन्दानिलैः स्पन्दितम् ।
संघर्षादिव पुष्पितं क्षितिरुहैर्भाग्यैः समुन्मीलितं
भृङ्गाणाञ्च तथा मनोरथशतैर्यूनामनूनायितम् ॥९॥

*नटी* — तह त्ति ( *गायति* )

एदस्सिं णिहिदभरो सइवे कुसुमाअरे वि हु मअणो[2] ।
सुअरत्तिलोलविअअव्वावारो रइपरो जअइ ॥१०॥

[ *तथा इति,*
*एतस्मिन्निहितभरः सचिवे कुसुमाकरेऽपि खलु मदनः ।*
*सुकरत्रिलोकविजयव्यापारो रतिपरो जयति ॥* ]

*सूत्रधारः* — ( *साभिनन्दनम्*[3] ) आर्ये, सुश्लिष्ट[4]मिदमविगीतं तव गीतम्, यदत्र मन्त्रिणा वसन्तेनोदूढकर्तव्यभूयिष्ठधुरतया लघूकृतस्वव्यापारभरो मन्मथो निरन्तरं सुखपरश्च तत्रभवतो रागस्य दुहितरि रत्याञ्च तत्पर इति द्वेधा सूचितमभिधेयम् । तन्नियोजय नचिरा-

---

१. क णीभूय । २. क मयणो । ३. क सानन्दम् । ४. 'सुश्लीष्ठ'—मू० प्र० ।

तत्तद्भूमिकापरिग्रहाय सकलं शैलूषजनम्। अहमेव सह मारिषेण सनर्मसचिवस्य मन्मथस्य समाददे[1] नैपथ्यम्। आर्याऽपि रत्याः।

*नटी* — जं आणवेइ अज्जो। [*यदाज्ञापयत्यार्यः*]

( *इति निष्क्रान्ता*

*सूत्रधारः* — एषोऽस्मि मन्मथः सम्पन्नः।

( *प्रविश्य* )

*नटः* — अहमपि विदूषकः।

॥ प्रस्तावना ॥

*मन्मथः* — ( *परिवृत्य विदूषकेण सहासन उप[2]विष्टः, सोत्कण्ठमात्मगतम्* )

रथ्यायां चरता मया सकुतुकं ह्यः सौधमासेदुषी
दृष्टा स्थेमवतीव विद्युदपरिभ्रंशेव तारा दिवः।
मृद्वी हेमलतेव लोलनयना काऽप्यङ्कुरद्यौवना
यस्याः प्रेक्षितविभ्रमैर्वबृतिरे स्मेरोत्पलिन्यो दिशः ॥११॥

( *इति पारवश्यं नाटयति* )

*विदूषकः* — वअस्स, अहिगअपरमत्थसुहो विअ किं वि पज्झाअंतो दीसइ[3] भवं। [ *वयस्य, अधिगतपरमार्थसुख इव किमपि प्रध्यायन् दृश्यते भवान्* ]

---

१. क °थस्याददे। २. क °सनमुप°। ३. क दीसई।

*मन्मथः* — ( *अनाकर्णितकेन स्वगतं पुनस्तदेवाम्रेडयति* )

*विदूषकः* — ( *आत्मगतम्* ) अम्हो मए बहिरस्स[1] कण्णे गीदं । ( *प्रकाशम्; मन्मथं हस्तेन चालयन्* ) वअस्स, किं रण्णचंदिमा मह झरइ[2] ? [ *अहो मया बधिरस्य कर्णे गीतम् । वयस्य, किमरण्यचन्द्रिका महः क्षरति ?* ]

*मन्मथः* — ( *आकर्ण्य* ) सखे, किमाह भवान् ?

*विदूषकः* — वअस्स, कुदो एत्तिअं दाणिं तुह चिंताकालणं ? [ *वयस्य, कुत एतावदिदानीं तव चिन्ताकारणम् ?* ]

*मन्मथः* — सखे सांख्यायन, तवापि किमकथनीयं नाम ! ( *रथ्याया-मित्यादि*[3] *पूर्वोक्तं पठति* )

*विदूषकः* — ( *स्वगतम्* ) अणुविहिज्जंतो हि एसो मं चेअ आआसइस्सइ, ता एव्वं उवक्कमामि । ( *प्रकाशम्; साक्षेपम्* ) वअस्स, सअल-भुअणव्वामोहआरिणो तुह वि संविमोह इत्तिआ इत्थिअ त्ति मिच्छा दाव एदं । [ *अनुविधीयमानो (?) ह्येष मामेवाया-सयिष्यति । तदेवमुपक्रमामि । वयस्य, सकलभुवन-व्यामोहकारिणस्तवापि सम्मोह एतावत् स्त्रिया (?) इति मिथ्या तावदेतत्* ]

*मन्मथः* — सखे, मैवम् ।

**कामं सन्ति जगत्त्रये मृगदृशो यासां विलासाद्भुतै-**
**रुन्मादयन्ति तपस्विनोऽपि नियमानुत्सृज्य नैषा तु ताः ।**

---

१. क बधिरस्स । २. झरई मू० प्र० पा० । ३. क °मिति ।

केनासौ निरमायि वा कृशतनुर्यन्नेत्रपद्माञ्चल-
स्पन्दादेव हि मन्मथस्य जनितो मे मन्मथोऽन्यो हृदि ॥१२॥

*विदूषकः* — ( *सहासम्* ) वअस्स, कामुअस्स अप्पा हि मदेव्वअबला अच्चरत्ति (?) आभाणओ लोअस्स[1]। [ *वयस्य, कामुकस्यात्मा ……? इति आभाणको लोकस्य* ]

*मन्मथः* — सखे, किं मां मृषावादिनमाशङ्कसे ?

*विदूषकः* — वअस्स, होदु णाम सच्चवअणो भवं। णअरसोहग्गविलोअणकोदूहलेण सोहग्गादो परिदो दिण्णदिट्ठीए ताए णाअर[2]महिलाए सह अप्पउत्ताणं वि पेक्खिदविब्भमाणं अप्पाणं चिअ गोअरं संभाविअ किं ति एद्दहं संतप्पसि ? [ *वयस्य, भवतु नाम सत्यवचनो भवान्। नगरसौभाग्यविलोकनकौतूहलेन सौधाग्रात् परितो दत्तदृष्ट्या तया नागरमहिलया सह ……मपि प्रेक्षितविभ्रमाणामात्मानं चैव गोचरं सम्भाव्य किमित्येतावत् सन्तप्यसि ?* ]

*मन्मथः* — अये यथाजात, किं मां ग्रामीणमवगच्छसि ? निशमय तावत्।

मामन्यत्र वलद्दृशं मृदुतनुः[3] स्वैरं लुलोके रसा-
न्मय्यालोकनसस्पृहे तु विदधे सङ्कोचलीलां दृशोः।
सा सख्यन्तरिताऽभवत् सविधगेवाहस्य धारावशा-
च्चक्रे दूरगते च सौधमुदयच्चन्द्रं समुत्कन्धरा ॥१३॥

*विदूषकः* — वअस्स, एव्वं वि अविण्णादकुलसीलाए संसइदपाणिग्गहवि[4]हीए

---

१. क °ओ खु लो°। २. क णअर°। ३. °न्यत्र दृशं मृदूत्तमतनुः।
४. क °ग्गहणवि°।

परव्वदीए तीए दिट्ठमेत्त एव्व का णाम तुज्झ पच्चासा ? [ *वयस्य, एवमप्यविज्ञातकुलशीलायाः संशयितपाणिग्रहविधेः परवत्यास्तस्या दृष्टमात्र एव का नाम तव प्रत्याशा ?* ]

*मन्मथः* — अत एव सन्तप्यते ।

*विदूषकः* — वअस्स, किदं संदावेण । अहं तीए अहिजादाए संमाणइस्सं वअस्सं । [ *वयस्य, कृतं सन्तापेन । अहं तयाऽभिजातया संमानयिष्यामि वयस्यम्* ]

*मन्मथः* — ( *सस्पृहम्* ) सखे, कथमिव ?

*विदूषकः* — वअस्स, परिणिट्ठिदो म्हि खु अट्ठसु वि जोतिससिज्झंतेसु । आदो सअलेहिं वि णाअरिएहिं तेसु तेसु अब्भुअअकज्जेसु अवस्सपुच्छिदव्वस्स मह सुअरा[1] दाव घडिदसव्वस्स लाहकहणेण तुम्हाणं दोण्णं वि अण्णुण्णसंघडणा । [ *वयस्य, परिनिष्ठितोऽस्मि खल्वष्टस्वपि ज्यौतिषसिद्धान्तेषु । आदौ सकलैरपि नागरिकैस्तेषु तेष्वभ्युदयकार्येष्ववश्यप्रष्टव्यस्य मम सुकरा तावत् घटितसर्वस्य लाभकथनेन युवयोर्द्वयोरप्यन्योन्यसङ्घटना* ]

*मन्मथः* — ( *विहस्य, स्वगतम्* ) अलङ्कारोऽयमीदृशानां यदसम्बद्धव्य[2]वहारितेति । ( *प्रकाशम्* ) सखे, जानामि ननु तव[3] नैपुणम् । कथय तावत्, अपि कश्चिदस्त्युपायस्तस्या हृदयङ्गमायाः सविशेषदर्शने ?

---

१. क महासुआरा । २. क सम्बद्धव्य° । ३. क ते ।

*विदूषकः* — ( *सोत्प्रासम्* ) वअस्स, मह वि कालत्तअ[1]दंसणब्भइल्लस्स बम्हणस्स किं णाम अविण्णादव्वं अत्थि ! ( *इति ध्याय*[2]*न्निव तूष्णीं क्षणमवस्थाय* ) वअस्स, [3]दिट्ठो खु मए तुह हिअअवल्लहाए दंसणजोओ । [ *वयस्य, ममापि कालत्रयदर्शनविदग्धस्य ब्राह्मणस्य किं नामाविज्ञातव्यमस्ति ! वयस्य, दृष्टः खलु मया तव हृदयवल्लभाया दर्शनयोगः* ]

*मन्मथः* — सखे, कीदृशोऽसौ ?

*विदूषकः* — वअस्स, मए[4] दाव दिअहविसेसेसु समिक्कुसाहलणकालणादो इदो सण्णिहिदस्स एव्व णंदणु[5]ज्जाणस्स पेरंते पडिब्भमंतेण तत्थ जदिच्छाए मिलिअ कीलंतीओ अण्णुण्णसरिसीओ णाअरकण्णआओ पेक्खी[6]अंदि । तक्केमि कदाइ सा वि अहि[7]जादा आअच्छंती होज्जइ । [ *वयस्य, मया तावद् दिवसविशेषेषु समित्कुशाहरणकारणात् इतः सन्निहितस्यैव नन्दनोद्यानस्य पर्यन्ते परिभ्रमता तत्र यदृच्छया मिलित्वा क्रीडन्त्योऽन्योन्यसदृश्यो नागरकन्यकाः प्रेक्ष्यन्ते । तर्कयामि कदापि साऽप्यभिजाता ऽऽगच्छन्ती भवेत्* ]

*मन्मथः* — ( *सौत्सुक्यम्* ) सखे, समुत्पादितकुतूहलोऽस्म्येवंवादिना भवता नन्दनोद्यानगमनाय । ( *इति करलालितशुको घुटिकाद्यनुरादायोत्तिष्ठन् विदूषकं प्रति* ) सखे[8], गच्छाग्रतः ।

*विदूषकः* — ( *स्वगतम्* ) कीलुप्पाडिणा कीसेण विअ सअं एव्व मए संपादिओ

---

१. क °त्तय° । २. क निध्या । ३. क इतः परं वाक्यमिदम्, अग्रे च मन्मथवचनं नास्ति । ४. क मम । ५. क णंड्डिणु° । ६. क पेक्खि° । ७. क °वि सा वि अहि° । ८. क 'सखे' इति नास्ति ।

एसो अणत्थो । का गई । (*प्रकाशम्*) इदो इदो वअस्सो । [*कीलोत्पाटिना कीशेनेव स्वयमेव मया सम्पादित एषोऽनर्थः । का गतिः । इत इतो वयस्यः* ]

(*इत्युभौ परिक्रामतः*)

*मन्मथः* — (*पुरतो वितीर्णचक्षुः*) सखे, पश्य तावदस्यारामस्य रामणीयकम् ।

कुन्दैरङ्कुरितं नवैर्विहसितं लोध्रैरिवोत्केसरै–
र्वासन्तीभिरुदञ्चितं बहलितं यत्पाटलाभिस्तथा ।
नीपैर्मेदुरितं भ्रमन्मधुकरैरम्भोरुहैर्जृम्भितं
सङ्केतस्थलमित्यवैमि तदिदं षण्णामृतूनामपि ॥१४॥

(*इति पक्षद्वारेण नन्दनवन*[1]*प्रवेशं नाटयित्वा सर्वतो निरूपयन्*)
अहो मन्दारप्रभृतीनां महाभाग्यम् !

सिन्धोर्जन्म सुरेन्द्रधाम्नि वसतिर्लक्ष्मीः स्वयं सोदरा[2]
रूपं त्वद्भुतसर्वरत्नसुभगं पीयूष[3]गर्भं फलम् ।
एतेषां सुरशाखिनां ननु सखे काऽन्या स्तुतिः स्यादतो
यल्लोके यदुपज्ञमेव महतामौदार्यधुर्यं यशः ॥१५॥

अपि तावदमी समीहितदानशौण्डा मनोरथं मे पूरयिष्यन्ति ?

*विदूषकः* — मह वि णाम हिअअप्पमोदएहिं[4] मोदएहिं । [*ममापि नाम हृदयप्रमोदकैर्मोदकैः*]

*मन्मथः* — सखे,

इतो मुखरिता पिकैर्नवरसा रसालच्छटा
विखण्डितफला शुकैरिह च दाडिमीवीथिका ।

---

१. क °वन° इति नास्ति । २. क सोदरी । ३. 'पिय्यूष' इति मू० प्र० पा० । ४. क °मोदेहिं ।

**प्रनृत्तशिखिमण्डलाऽत्र च विभाति नीपावलि—**
**र्भ्रमद्भ्रमरमालि[1]का वकुलपालिका चाग्रतः ॥१६॥**

*विदूषकः* — (*सर्वतोऽवलोक्य*[2]) वअस्स, दाणिं खु ण का वि एत्थ दीसइ। तुवं दाव भमररेहंचिअचलणो विअ परिदो वि भमंतो कहिं वि ण चिट्ठसि। मह उण रक्खसीए विव बभुक्खाए पज्जाउलीकिदस्स पादा अग्गदो ण प्पसरंदि। ता एत्थ एव्व सिणिद्धच्छाए कअंबतरुमूलम्मि विस्समिस्सं। (*इत्युपविशन् कर्णं दत्वा सहर्षम्*) वअस्स, हत्थं दक्खिणेण वणभोअणमिलिआणं मिव ब्रम्हणाणं मंतज्झणी सुणीअदि। ता अणुमण्णदु मं वअस्सो तहिं गमणस्स। [*वयस्य, इदानीं खलु काऽप्यत्र दृश्यते। त्वं तावद् भ्रमररेखाञ्चितचरण इव परितोऽपि भ्रमन् कुत्रापि न तिष्ठसि मम पुना राक्षस्येव बुभुक्षया प्रत्याकुलीकृतस्य पादावग्रतो न प्रसरतः। तदत्रैव स्निग्धच्छाये कदम्बतरुमूले विश्रमिष्यामि। वयस्य, हस्तं दक्षिणेन वनभोजनमिलितानामिव ब्राह्मणानां मन्त्रध्वनिः श्रूयते। तदनुमन्यतां मां वयस्यस्तत्र गमनाय*]

*मन्मथः* — सखे, दुर्निरोधसमुत्साहोऽसि।

*विदूषकः* — वड्ढदु भवं [*वर्धतां भवान्*]

(*इति निष्क्रान्तः*)

*मन्मथः* — (सस्मितम्) कथं गत एवौदरिकः! (*इति नयनानन्दनान् नन्दनप्रदेशानभितो निभालयन् सकौतुकम्*)

---

१. क °र्भ्रमद्भ्रमरमालि° इति नास्ति।
२. क 'सर्वतोऽवलोक्य' इति नास्ति।

**मल्ली सेयमिहान्तिकस्थितमिमं माकन्दमासेवते**
**ताम्बूली ननु शोभते समधिकं पूगद्रुमालम्बिनी ।**
**आलिङ्गत्यधुना लवङ्गलतिका तक्कोलमुच्चैरिदं**
**साहित्थं स्पृहणीयभावमयते वल्लीतरूणामपि ॥१७॥**

हन्तास्मिन्नपि नन्दने वने रतिं न विन्दामि । (*इत्युत्कण्ठां नाटयति*)

(*ततः प्रविशति कुसुमापचयलीलामभिनयन्ती सह सखीभ्यां रतिः*)

*रतिः* — (*स्वगतम्*) अम्हो पुव्वस्सि दिअहे अभूतपुव्वं कुदो मह समुप्पण्णं सौहाहिरोहणकोदूहलं। समुप्पण्णे वा तस्सि णअरवीहीए तुरअं णच्चअंतस्स तस्स सुहअस्स कुदो णु णिव्वुत्तं जदिच्छादंसणं। दिट्ठे अ सअलणाअरलोअसाहारणं तस्सि कुदो वा कुलह्म(म्ह ?)-आजणसीलपडिवु (ऊ ?)लो मह सुइरपरिइदे विअ एक्कपए जणिदो एरिसो अणुराओ जेण खु संपदं।

**पिदुहिं परतंताए परोक्खपेम्मं वि तं णिसामेदुं ।**
**उत्तम्मइ किंमिव मे उज्झिअधीरत्तणं हिअअं ॥१८॥**

(*इति चिन्तयन्त्यन्यतः पदं न्यस्यति*)

[*अहो पूर्वस्मिन् दिवसेऽभूतपूर्वं कुतो मम समुत्पन्नं सौधाधिरोहणकौतूहलम्। समुत्पन्ने वा तस्मिन् नगरवीथ्यां तुरगं नर्तयतस्तस्य सुभगस्य कुतो नु निर्वृत्तं यदृच्छादर्शनम्। दृष्टे च सकलनागरलोकसाधारणं तस्मिन् कुतः कुलकन्यका(?)जनशीलप्रतिकूलो मम सुचिरपरिचित इव एकपदे जनित ईदृशोऽनुरागो येन खलु साम्प्रतम्।*

*पितृभ्यां परतन्त्रायाः परोक्षप्रेमापि तन्निशमयितुम् ।*
*उत्ताम्यति किमिव मे उज्झितधीरत्वं हृदयम् ।।]*

*सखी* — (सपरिहासम्) हला रइ, अ(इ)दाइं वि पुप्फाइं मह करगए समुग्गए अणिक्खिविअ कहिं पत्थिदा सि ? [*हला रते, इदानीमपि पुष्पाणि मम करगते समुद्गकेऽनिक्षिप्य कुतः प्रस्थिताऽसि ?* ]

*रतिः* — (सव्रीलावहित्थम्) सहि कीरवाणि, इमस्स अहिणवुग्गअकिसलअग्गासकसाअकंठकलअंठकंठसमुदंचिअपंचमुग्गारविवसीकिदजुवजणमाणसस्स णिरंतरणिवडंतमअरंदणीसंदमिलंतफुल्लधअविंदकलअलंचिअमंजुलमंजरीसोरहाहिवासिअदसदिसामुहस्स परिणदफलभरजिहच्छासमूसुअकुलकलालावसुहअस्स सहआरपाअवस्स सोहग्गेण ओहरिदहिअआ तुह परिहासविसओ म्हि संवुत्ता। [*सखि कीरवाणि, अभिनवोद्गतकिसलयग्रासकषायकण्ठकलकण्ठसमुदञ्चितपञ्चमोद्गारविवशीकृतयुवजनमानसस्य निरन्तरनिपतन्मकरन्दनिष्यन्दमिलत्फुल्लदरविन्दकलकलाञ्चितमञ्जुलमञ्जरीसौरभाधिवासितदशदिङ्मुखस्य परिणतफलभरजिघत्सासमुत्सुकशुककुलकलालापसुभगस्य सहकारपादपस्य सौभाग्येनापहृतहृदया तव परिहासविषयोऽस्मि संवृत्ता*]

*अन्या* — हला रइ, सअललोआणंदणगुणगणमहुरस्स पुरवीहीदिट्ठअरस्स तस्स[1] महाभाअस्स त्ति भणिदव्वे किं रस लावदेसेण ! [ *हला रते, सकललोकानन्दनगुणगणमधुरस्य पुरवीथीदृष्ट-*

---

१. क तुस ।

*चरस्य तस्य महाभागस्येति भणितव्ये किं रसालापदे-शेन ?* ]

*रतिः* — सहि कोइलवाणि, तुवं वि किदसंकेदा विअ कीरवाणीए एव्व अणुहरेसि[1] ता मिच्छासंकावदीणं तुम्हाणं सविहे ण चिट्ठिस्सं । [ *सखि, कोकिलवाणि, त्वमपि कृतसङ्केतेव कीर-वाण्या एवानुहरसि तन्मिथ्याशङ्कावतीनां युष्माकं सविधे न स्थास्यामि* ]

( *इति सप्रणयकोपं पदान्तरे स्थित्वा पुष्पाण्यप*[2]*चिनोति*)

*मन्मथः* — ( *करगतं कीरमवलोक्य* ) अयं तावदशनायया तान्तलोचनः प्रतिभाति, तदेनं सुहितं करोमि (*इति पार्श्वतश्चक्षुः प्रसारयन्*) अस्मिन् लतावितानवलयिते नातिदूरस्थिते सहकारतरावसौ पचेलिमः फलस्तबको निजसौ[3]रभेन समाकर्षति मे चेतः । अव-तारयाम्य[4]स्मादेकम् । ( *इति धनुर्मुक्तया घुटिकया फलं पात-यति* )

*रतिः* — ( *सप्रमोदाद्भुतं सख्यौ प्रति* ) हला, बुलोएह एदं ओलूपा-( *षा ?*)[5]पसूणगब्भे मह उत्तरिअअंचले अकंडणिवडिदं परिणदं सहआरफलं । [ *हला, पश्यतम्, ओलूपा (?) प्रसूनगर्भे ममोत्तरीयाञ्चलेऽकाण्डनिपतितं परिणतं सहकार-फलम्* ]

*सख्यौ* — ( *सरभसमुपसृत्य* ) पियसहि रइ[6], अविलंबिअं मणरहसिज्झि-

---

१. क °दा वि ¨ णीए एहरेसि । २. क °ण्यव° । ३. क °लिमफलस्तब-कानि ससौ° । ४. क अवतराम्य° । ५. क 'ओलूपा' इति नास्ति । ६. क रई ।

सूअओ एस दे फललाहो। [ *प्रियसखि रते, अविलम्बितं मनोरथसिद्धिसूचक एष ते फललाभः* ]

**मन्मथः** — ( *सहकाराभिमुखमर्पितकतिपयपदो रतिमवलोक्य सानन्द-सम्भ्रमम्* )

सेयं सेयं शशधरमुखी या मया दृष्टपूर्वा
वित्रस्तैणीचपलनयना चन्द्रिका चेतसो मे।
मोहो वेत्थं मम स च कथं स्याद् यदस्याः सखीभ्यां
स्वैरालापः कलयति सुधासम्भृतां श्रोत्रसीमाम् ॥१९॥

अधुना तावदनया[1]—

पादाग्रस्थितया ऋजूकृतवलिप्रव्यक्तरोमावलि-
श्वासोदञ्चदुरोजकोशयुगलं चोन्नम्रया यत्नतः।
न्यञ्चन्त्याऽप्यवशान्नितम्बभरतः स्विद्यल्ललाटं शनै-
श्चिन्वत्या[2] कुसुमं तरोः कवलितं लोलभ्रु वा मे मनः ॥२०॥

( *निपुणं निरूप्य* ) अहो रूपसम्पदेतस्याः।

आदातुं सह पल्लवैः प्रयतते पाणिं स्वमप्यञ्जसा
साकं पुष्पभरेण च स्मितरुचं हन्तापचेतुं निजाम्।
किञ्चोत्सारयितुं समं मधुकरैर्लोलां कटाक्षश्रियं
सत्रैषा[3] (?) लतया भुजां नमयितुं सुभ्रूः स्वकीयामपि ॥२१॥

**रतिः** — ( *सहकारफलं हस्ते*[4] *कुर्वती विभाव्य* ) हला, कस्स वि धाणु-

---

१. क 'अधुना तावदनया' इति नास्ति। २. क चिन्वंत्या।
३. क सन्नेषा (?)। ४. क स्वहस्ते।

वक्कस्स घुडिआहिघादसमुक्खुडिद[1]विंतं विअ दीसइ[2] एदं। [*हला, कस्यापि धानुष्कस्य घुटिकाभिघातसमुत्खुडित(?)वृन्तमिव दृश्यत एतत्*]

*सख्यौ* — पिअसहि, जं वा होज्ज, सुसउणं खु एदं पिअसहीए। [*प्रियसखि, यद् वा भवतु, सुशकुनं खल्वेतत् प्रियसख्याः*]

*मन्मथः* — इदं तावत्कारणं[3] ममात्मानमाविष्कर्तुमाभिश्च वाचं मिश्रयितुम्। (*इति स्वयमवपातितं सहकारफलमादित्सुरिवोपसर्पति। सर्वाः ससम्भ्रमाश्चर्यं[4]म मथमवलोकन्ते*)

*रतिः* — (*सहर्षमात्मगतम्*) दंसिदसिज्झी दाणिं चेअ मह परदेव्वदाराहणव्ववसाओ। जं इमो रच्छादिट्ठअरो हिअअपाडच्चरो जणो कुदो वि एत्थ आअच्छिअ मह लोअणाणं सुहं उप्पादेई[5]। [*दर्शितसिद्धिरिदानीमेव मम परदेवताराधनव्यवसायः। यदयं रथ्यादृष्टचरो जनः कुतोऽप्यत्रागत्य मम लोचनयोः सुखमुत्पादयति*]

(*इति सस्पृहं साचिप्रेरितया दृशा मन्मथं निशामयति*)

*मन्मथः* — (*सप्रत्याशमात्मगतम्*)

**तिर्यग्विचलितनयनं तरलाक्षी मामवेक्षमाणैषा।**
**वरणाय निर्मिमीते विकचोत्पलमालिकामिवापूर्वाम्[6] ॥२२॥**

अपि च[7],

---

१. क °समुखंदिद°। २. क दीसई। ३. क इदमेव कारणं। ४. क सर्वे सविस्मयाश्चर्यं। ५. उप्पादेइ। ६. क °पूर्वा। ७. क 'अपि च' इति नास्ति।

द्राघीयसी कृशाङ्ग्या दृष्टिः कृष्णार्जुनश्रियं दधती ।
सेनेव पाण्डवानां श्रयते कर्णातिलङ्घनोल्लासम् ॥२३॥

( *विमृश्य* )

अचिरविन्यस्तपदेन तावदस्यां यौवनेन भवितव्यम् । तथाहि,

लावण्याम्बुभरीतला[1]दिव शनैरुन्मज्जतः साम्प्रतं
कुम्भौ यौवनकुञ्जरस्य तदिमौ जानामि वक्षोरुहौ ।
तद्गण्डस्थलनिस्रुता[2] विलसति स्रस्तेव दानाम्बुनो
धारैषोदरसीम्नि चञ्चलदृशो[3] रोमावलीकैतवात् ॥२४॥

किञ्च,

मा[4] भूद्भग्ना कुवलयदृशो गात्रवल्लीति धात्रा
वेणीदम्भात्सदयमनसाऽदायि पश्चादुपघ्नः ।
न्यस्ता पीनस्तनफलभरप्रोद्गमे रोमराजि-
व्याजाद् यष्टिर्नियतमुदरे यौवनेनेन्द्रनीली[5] ॥२५॥

( *प्रकाशम्; सख्यौ प्रति* ) भवत्यौ, अपि समेधितफलो वां सख्याः कुसुमापचयः ?

***सख्यौ*** — (*सविनयम्*) महाभाअ, एण्हिं[6] एव्व । [*महाभाग, इदानीमेव*]

***मन्मथः*** — (*स्वगतम्*) अहो प्रगल्भता वचनस्य ! (*प्रकाशम्*) भवत्यौ, कोमलतनोरायासातिशयाय लक्ष्यते खल्वयं कुसुमानां स्वहस्तापचयः । यतः,

---

१. क °सरित्तला° । २. क निःसुता । ३. क °दृशो । ४. 'सा' मू० प्र० पा० । ५. क °नीला । ६. क एहिणं ।

विस्रस्तं कबरीभरेण वहली[1]भूतं श्रमाम्भःकणै—
रुत्कम्पिस्तनमण्डलैरुपचितं श्वासैरलीमोद्गमैः ।
तान्तं मध्यभुवा नितान्तमधुना सूनेषु लूनेष्वपि
छिन्नेष्वेणदृशः कराङ्गुलियुगे हन्तारुणिम्नैधितम् ॥२६॥

*रतिः* — *(लज्जां नाटयति)*

*सख्यौ* — महाभाअ, ओणीदपलिस्समा णो पिअसही इमिणा महाभाअस्स महुरेण वअणोवण्णा[2]सेण । [*महाभाग, अपनीतपरिश्रमा नः प्रियसखी अनेन महाभागस्य मधुरेण वचनोपन्यासेन*]

*मन्मथः* — *(स्वगतम्)* अये, साकूतमिदमनयोर्जल्पितम्[3] । *(प्रकाशम्)* भद्रे[4], यदि सौहृदमस्मासु तदलङ्क्रियतामचिरमिवेयमनुनिशमिन्दुकर-कन्दलसम्बन्धनिष्यन्दिनी चन्दनाचलगन्धवहस्तनन्धयस्पन्द-शिशिरा चन्द्रकान्तमयी बालरसालमूल[5]वेदिका ।

*सख्यौ* — *(सप्रश्रयम्)* महाभाअ, अणुगहीद म्हो । *(रतिं प्रति)* हा हला[6], माणणीअवअणो[7] अम्हाणं[8] अआरणमित्तं एस महाभावो । [*महाभाग, अवहिते स्वः । हला, माननीयवचनोऽस्माकमकारणमित्रमेष महाभागः*]

*(इति सर्वे उपविशन्ति)*[9]

[10]*मन्मथः* — भद्रे, भवत्सौजन्येन दत्तानुयोगावसराः स्मः ।

---

१. क वहुली° । २. क °रेण उवण्णा° । ३. क °नयोपजल्पितम् । ४. क भज । ५. क °रसालत [रु] मूल° । ६. क हाला । ७. क °वआणो । ८. क 'अम्हाणं' इति नास्ति । ९-१०. क 'इति सर्वे उपविशन्ति' तथा मन्मथवाक्यमिदं नास्ति ।

**सख्यौ** — महाभाअ, ओहिद म्हो। [*महाभाग, अवहिते स्वः*]

**मन्मथः** — भवत्यौ, को नामाभिजनो जन्मना परिष्कृतोऽनयाऽभिरूपया ?

किञ्च,

**अस्निग्धैः शिरसिरुहैरङ्गैरमृजाविधानधूसरितैः।**
**वसनेन क्षौमेण च वेदाहमिमां कुतोऽपि धृतनियमाम्[1] ॥२७॥**

**सख्यौ** — महाभाअ, इयं णो पिअसही[2] तत्तहोदो राअस्स अज्जाए मुदिआए समुप्पण्णा कण्णा रई णाम। इमेसु दाव सुरब्धएसु अणुगहीदजोव्वणाए अदिसइदतेल्लोक्कमहिलाजणलोण्णसंपत्तीए इमाए अणुरूववरलाहसावेक्खेण गुरुअणेण उवदिट्ठो भअवदीए सोहग्गजणणीए परदेव्वदाए पसादकिदे समाराहणविही। ता एस णिअमपरिग्गहो। एसा अ[3] सहत्थेण ओएदव्वदा[4] पसूणाणं। [*महाभाग, इयं नः प्रियसखी तत्रभवतो रागस्यार्यायां मुदितायां समुत्पन्ना कन्या रतिर्नाम। एषु तावद् दिवसेषु, अनुगृहीतयौवनाया अतिशयितत्रैलोक्यमहिलाजनलावण्यसम्पत्तेरनुरूपवरलाभसापेक्षेण गुरुजनेनोपदिष्टो भगवत्याः सौभाग्यजनन्याः परदेवतायाः प्रसादकृते समाराधनविधिः। तदेष नियमपरिग्रहः, एषा च स्वहस्तेनावचेतव्यता प्रसूनानाम्*]

**मन्मथः** — (*साश्वासम्; स्वगतम्*) औपयिक एवास्यां मे प्रेमानुबन्धः। (*प्रकाशम्*) भद्रे, उपलब्धमिहैवाभिजात्यगुणश्रियोः सामाना-

---

१. क उत्तरार्धमिदं नास्ति। २. क 'सख्यौ इयं नो पिअसही' इति नास्ति।
३. क पुए। ४. क आएदववदा।

धिकरण्यं यदाशास्यं कन्यासु, समुचिता च[1] परदेवताप्रसादसम्पिपादयिषा ।

**रतिः** — (स्वगतम्) कुसलं मंतिअं महाभाएण । [*कुशलं मन्त्रितं महाभागेन*]

**सख्यौ** — महाभाअ, एदिसेण[2] अत्तहोदो पकिदिसरलत्तणेण जणिदा णो जिण्णासा[3], किंणामहेओ महाभाओ ति । [*महाभाग, ईदृशेनात्रभवतः प्रकृतिसरलत्वेन जनिता नो जिज्ञासा, 'किन्नामधेयो महाभाग इति*]

**रतिः** — (स्वागतम्) हिअअ, मा उत्तम्म । तुह चिंतिदाणुरूवो एव्व सहीणं अणुओओ । [*हृदय, मा उत्ताम्य । तव चिन्तितानुरूप एव सख्योरनुयोगः*]

**मन्मथः** — भद्रे, अपि[4] श्रुतपूर्वो भवतीभ्यां मन्मथो नाम ?

**सख्यौ** — महाभाअ, आं । [*महाभाग, आम्*]

**मन्मथः** — तमेवैतं जानीतम् ।

**सख्यौ** — (*सविस्मयं जनान्तिकम्*) कहं सो एसो जो किल सुणीअदि भअवदो लच्छीवल्लहस्स तणओ सीमा सोंदेरस्स इत्थिआपुंसाणं विलासोवदेसदेसिओ वम्महो ति ? (प्रकाशम्) महाभाअ, किदत्था अम्हे महाभाअस्स दंसणब्भुअएण । [*कथं सैषः ? यः किल श्रूयते भगवतो लक्ष्मीवल्लभस्य तनयः, सीमा*

---

१. क 'च' इति नास्ति । २. क ण एरिसो । ३. क जणिदो जि° ।
४. क अपि' इति नास्ति ।

*सौन्दर्यस्य स्त्रीपुंसयोर्विलासोपदेशदेशिको मन्मथ इति । महाभाग ! कृतार्थे स्वो महाभागस्य दर्शनाभ्युदयेन*]

*मन्मथः* — भवत्यौ, ममापि सफलं चक्षुर्दर्शनीयदर्शनेन । (*उदयद*[1]*वस्थाविशेषां रतिं निर्वर्ण्य स्वगतम्*)

प्रस्विन्नपुलकिताङ्गं प्रहितप्रतिसंहृतालसदृगन्तम् ।
सङ्गतवेपथु सुतनोः स्थितिरियमस्याश्चिरं जीयात् ॥२८॥

*सख्यौ* — (*रतिं मन्मथञ्च निरूपयन्त्यौ, अपवार्य*) अइ, अण्णोण्णाणुरूव्वसं[2]पत्ताणं एदाणं दोण्णं वि समाअमो होएज्जइ, ता चरि[3]अत्थं विहिणो णिम्माणकोसलं । [*अयि, अन्योन्यानुरूपसम्पदोरेतयोर्द्वयोरपि समागमो भवेत्, तच्चरितार्थं विधेर्निर्माणकौशलम्*]

*रतिः* — (*सौत्सुक्यम्, स्वगतम्*) कुदो मह एरिसं भाअहेअं । [*कुतो ममेदृशं भागधेयम्*]

(*प्रविश्य*)

*परिचारिका*—भट्टिदारिए, सज्जीकिदसवज्जोवअरणा अज्जू भट्टिदारिअं पडिवालेइ[4], ता तुवर देव्वदाअदणगमणस्स । [*भर्तृदारिके, सज्जीकृतसपर्योपकरणा आर्या भर्तृदारिकां प्रतिपालयति । तत् त्वर देवतायतनगमनाय*]

*मन्मथः* — (*सखेदमात्मगतम्*) इयं हि चिरस्यामृतवर्षिणीं कादम्बिनी[5]मनि-

---

१. °यक्द° इति मू०प्र० पा० । २. क °रुव्वरूत्रसं° । ३. क चारि° ।
४. क °वालज्जे । ५. क नितम्बि° ।

मेषमापिबतो नयनाभ्यां चातकस्य पातकस्यन्दफलं वात्याविस्फूर्तिः[1]।

रतिः — *(सविषादम्, स्व[2]गतम्)* हा देव्वहदअ, खणमेत्तं वि एदस्स लोअणामिअस्स मे तुवं असहणो संवुत्तो। [*हा दैवहतक! क्षणमात्रमप्येतस्य लोचनामृतस्य मे त्वमसहनः संवृत्तः!*] *(इति जिगमिषया सखीमुखमीक्षते)*

सख्यौ — *(मन्मथं प्रति)* अणुजाणादु णो णिरंतरावेक्खणिज्जसंणिही महाभाओ भूओ वि दंसणसुहलाहस्स। [*अनुजानातु नो निरन्तरापेक्षणीयसन्निधिर्महाभागो भूयोऽपि दर्शनसुखलाभस्य*]

मन्मथः — *(साभ्यनुज्ञमिव)* सावयन्तु भवत्यः स्वेष्टसिद्धये स्मर्तव्यश्चायं जनो विस्रम्भकथासु।

रतिः — *(स्वगतम्)* महाभाअ, तुमए ओहरिदहिअआए मह कुदो णु सम्हरणस्स अवआसो? [*महाभाग, त्वयाऽपहृतहृदयाया मम कुतो नु संस्मरणस्यावकाशः?*]

सख्यौ — महाभाअ, अम्हकेरा खु अब्भत्थणा एसा। [*महाभाग, आवयोः खल्वभ्यर्थनैषा*]

रतिः — *(स्वगतम्)* किं करेमि अणीसा अप्पणो। अज्जूणिओओ मं बलामोडिअ णेइ। [*किं करोमि, अनीशाऽऽत्मनः। आर्यानियोगो मां बलादामोट्य नयति*]

*(इत्यनिच्छन्त्येव कथमपि सखीभ्यां सह निष्क्रान्ता परिचारिकया च)*

---

१. क °पिबतो चातकस्य वात्याविष्कृतिः। २. क °षादमा०।

*मन्मथः* — (*सपरितापम्*) अहो, सान्तरायाणि सुखानि नाम। यदियमकालजलदेन प्रतिकूलेन दैवेनान्तरिता मे नयनानन्दिनी चन्द्रिका। कः पुनरस्याः करग्रह उपायः? (*इति चिन्तां नाटयन् साश्वासम्*) निर्व्याजवत्सला तावदस्मासु भगवती परदेवतायाश्चतुर्थावरणदेवता सर्वार्थसाधिका। तदमुनैव तीर्थेन सुखमवतराम्येनां लावण्यपूर[1]सरितम्। इह च कर्तव्ये नियोक्तव्यो मन्त्री वसन्तः। (*सानुस्मरणम्*) हन्त, प्रियासन्दर्श[2]नानन्दपरवशेन मया विस्मृत एवास्य कीरस्य सौहित्यविधिः। तद्रसालफलान्तरमवपात्य समर्पयाम्यस्मै। (*इति तथा करोति*)

(नेपथ्ये)

(*मङ्गलशङ्खनि[3]स्वनानन्तरम्*)

**उन्नालाम्बुजिनीदलस्य शिशिरां छायामुपासेदुषो-**
**श्चञ्चूपात्तबिसाङ्कुरार्पणपरान्योन्यं रसात् क्रीडतोः।**
**मध्याह्नोऽपि महोत्सवः प्रववृते सोयं रथाङ्गाह्वयोः,**

*मन्मथः* — (*आकर्ण्य*) साधूक्तं वैतालिकेन। यतः,

**हृद्यं तस्य तदेव यस्य घटते यस्मिन् रतिश्चेतसः ॥ २९ ॥**

(*ऊर्ध्वमवलोक्य*) कथं गगनमध्यमध्यारूढो भगवान् निदाघदीधितिः?

**वेगाक्रान्तनितान्तदीर्घसरणिर्भासां निधेः स्यन्दनो**
**यन्मध्येगगनं विकुण्ठितगतिर्निस्पन्दतां विन्दति।**

१. क 'पूर' इति नास्ति। २. क °यादर्श°। ३. क °लध्वनि°।

जाने तल्लुठितोत्थितान् खगपतेर्भ्रान्ताऽधुना स्वर्धुनी-
पूरस्नापितपायितान् गमयते विश्रान्तिमश्वानिति ॥३०॥

तदहमपि प्रियतमावि[1]श्लेषदवथु[2]निचुलितान्तरो दुर्वारसर्वतापनिर्वापयित्रीमस्य नन्दनोद्यानस्य पार्श्वतो निष्यन्दमानां मन्दाकिनीमवगाह्य माध्यन्दिनं विधिं निर्वर्तयिष्यामि ।

*(इति निष्क्रान्ताः सर्वे)*

इति जगन्नाथपण्डितकृतौ रतिमन्मथनाम्नि
नाटके[3] प्रथमोऽङ्कः ॥



१. क प्रियावि° । २. 'दवथु' इति नास्ति । ३. क इति श्रीरतिमन्मथनाटके° श्रीरस्तु ।

## द्वितीयोऽङ्कः

(ततः[1] प्रविशतश्चेट्यौ)

एकः — सहि मऊरिए, तह पमुद्धा वि भट्टिदारिआ एआरिसी संआद त्ति अच्चेरं खु एदं। [सखि मयूरिके, तथा प्रमुग्धाऽपि भर्तृदारिका एतादृशी सञ्जातेति आश्चर्यं खल्वेतत्]

अन्या — पिउच्छे सारिए, सरला सि तुवं किं ण पेच्छसि[2] भट्टिदारिआइ विलसिदं जोव्वणस्स ! [प्रियसखि सारिके, सरलाऽसि त्वम्, किं न प्रेक्षसे भर्तृदारिकाया विलसितं यौवनस्य ?]

(संस्कृतमाश्रित्य)

प्रागह्नां त्रितयादुपात्तपरिधी द्वाः पूगसाम्यस्पृशा—
वद्यत्वे तु कुचौ तुलां न सहतो[3] जम्बीरमालूरयोः ।
श्वो वा तत्परतोऽपि वाऽहनि सखि स्यातां कियन्तौ पुन—
स्तन्वङ्ग्याः क्व भुजान्तरं क्व नु समारम्भोऽनयोरीदृशः ॥१॥

सारिका — साहु दिट्ठं सहीए । इमेसु दाव[4] सुरुधपसु । [साधु दृष्टं सख्या । एषु तावद् दिवसेषु]

(संस्कृतमाश्रित्य)

---

१. इतः पूर्वं मूलपुस्तके 'श्रीदेव्यै नमः' इति लिखति । २. क पेक्खसि । ३. क सहते । ४ क 'दाव' इति नास्ति ।

**आलेख्ये मिथुनं कृतव्यतिकरं साकूतमालोकते**
**पाञ्चालीविहृतौ च सङ्कलयति द्वन्द्वं तदीयं रहः ।**
**उत्कण्ठामयते निशम्य चरितं स्त्रीपुंसयोर्नाटके**
**पृष्टा तच्च सखीजनेन सुतनुर्भूयस्तरां लज्जते ॥२॥**

तक्केमि अदो च्चिअ सरिसजामादुलाहकिदे पज्जाउलहिअओ पेक्खीअदि तादो अज्जू अ । [*तर्कयामि, अत एव सदृशजामातृलाभकृते प्रत्याकुलहृदयः प्रेक्ष्यते तात आर्या च*]

*मयूरिका* — पिउच्छे, चिंताउलघरं खु सव्वस्स वि कण्णआपिदुत्तणं णाम । (*अनुस्मृत्य*) साहु भणिदं केणवि अणुहवसालिणा एदं । [*प्रियसखि, चिन्ताकुलगृहं खलु सर्वस्यापि कन्यकापितृत्वं नाम । साधु भणितं केनाप्यनुभवशालिनैतत्*]

(*संस्कृतमाश्रित्य*)[1]

**जातां तनूजामनु लब्धजन्मा चिन्ता दुरन्ता यमला स्वसेव ।**
**संवर्धमानामनु वैधमाना शश्वद् गुरूणां हि मनो दुनोति ॥३॥**

इति

*सारिका* — सहि मऊरिए, हिओ किल रअणीए अज्जूतादेहिं उवक्कंते वरइत्ताणं पत्थावे आअण्णिदं हि पिअसहीए वि तत्तहोदो वम्महस्स पसंसणं । जह, [*सखि मयूरिके, ह्यः किल रजन्यामार्यातातभ्यामुपक्रान्ते वर्यत्वानां प्रस्तावे आकर्णितं हि प्रियसख्याऽपि तत्रभवतो मन्मथस्य प्रशंसनम् । यथा,*]

(*संस्कृतमाश्रित्य*)[1]

---

१. 'संस्कृतमाश्रित्य' इति मू० प्र० नास्ति ।

देवः शार्ङ्गधरः पिताऽस्य जननी सा लोकमाताऽग्रजो
भ्राताऽप्यम्बुजसम्भवो दिविषदां नेता पितृव्यः पुनः।
शर्वाण्येव पितृष्वसा जलनिधिर्मातामहो मातुल—
श्चन्द्रो हन्त वरः स्वयं तु मदनः क्वेदृग्गुणश्रीर्भवेत् ॥४॥ इति

ता किंति कण्णाअण्णिआए आअण्णिअणिअधूआपरिदावउत्तंतो वि तादो अणुरुव्वगुणाणं इमाणं दोण्णं वि ण णिव्वत्तेइ पाणिग्गह-मंगलं ? [*तत्किमिति कर्णाकर्णिकयाऽऽकर्णितनिजदुहितृ-परितापवृत्तान्तोऽपि तातोऽनुरूपगुणयोरनयोर्द्वयोरपि न निर्वर्तयति पाणिग्रहमङ्गलम् ?*]

*मयूरिका* — पिउच्छे, अणहिण्णासि लोअव्ववहारस्स वरपक्खीएहिं चेअ बहूपत्थणा सिलाहणिज्जेति। [*प्रियसखि, अनभिज्ञाऽसि लोकव्यवहारस्य, वरपक्षीयैरेव वधूप्रार्थना श्लाघनीयेति*]

*सारिका* — (*सचिन्तम्*) हला, कहं णु खु एदं संविहाणं होएज्जइ[1] ? [*हला, कथं नु खल्वेतत् संविधानं भवेत्*]

*मयूरिका* — पिउच्छे, किदं विआरेण। भट्टिदारिआराहणपरितुट्ठाए परदेव्वदाए सअं एव्व णिउत्ता एत्थ अज्जूए[2] सहपंसुकीलणमही भअवई सव्वत्थसाहिएव्व सव्वत्थं साहइस्सइ। [*प्रियसखि, कृतं विआरेण। भर्तृदारिकाराधनपरितुष्टया परदेवतया स्वयमेव नियुक्ताऽऽर्यायाः सहपांसुक्रीडनसखी भगवती सर्वार्थसाधिकैव सर्वार्थं साधयिष्यति*]

*सारिका* — अम्हहे पसादसुलहत्तणं परमेसराए। किंणो सहि[3] ओलीढे महुरसे

---

१. क होइज्जइ। २. क अज्जू। ३. क किं णो सही।

घिअसेवणेण विअ रच्छामुहमुहुत्तमेत्तदिट्ठस्स तस्स महाभाअस्स वम्महस्स पुणो वि णंदणुज्जाणम्मि सविसेसदंसणेणभट्टिदारिआए एरिसी हिअआवत्था णमूणीआदि सो उण[1] केरिसो इमस्सि ति। [*अहो प्रसादत्वं परमेश्वर्याः! किं नु सखि अवलीढे मधुरसे घृतसेवनेनेव रथ्यामुखमुहूर्तमात्रदृष्टस्य तस्य महाभागस्य मन्मथस्य पुनरपि नन्दनोद्याने सविशेषदर्शनेन भर्तृदारिकाया ईदृशी हृदयावस्थाऽनुज्ञायते (?) स पुनः कीदृशोऽस्मिन्निति ?*]

*मयूरिका* — हला, कहिदं खु एदाणं परप्पराणुराअसंवढ्ढण[2]पवत्ताए भअवदी पि अंतेवासिणीए तत्तहोदीए वसिणीए, जह भट्टिदारिआए दंसणादो पहुदि बलिअं उत्तम्मइ, सो वि महाभाओ त्ति। [*हला, कथितं खल्वेतयोः परस्परानुरागसंवर्धनप्रवृत्ता भगवती अन्तेवासिन्या तत्रभवत्या वशिन्या, यथा भर्तृदारिकाया दर्शनात् प्रभृति बलिकमुत्ताम्यति सोऽपि महाभाग इति*]

*सारिका* — पिअं मे, पिअं मे। [*प्रियं मे, प्रियं मे*]

*मयूरिका* — पिउच्छे, एण्हिं कहिं पत्थिदा सि ? [*प्रियसखि, इदानीं कुतः प्रस्थिताऽसि*]

*सारिका* — हला, भट्टिदारिआपिअसहीणं कोइलवाणीकीरवाणीणं वअणेण सिसिरोवआरसामग्गीसंपादणस्स। [*हला, भर्तृदारिकाप्रियसख्योः कोकिलवाणीकीरवाण्योर्वचनेन शिशिरोपचारसामग्रीसम्पादनाय*]

*मयूरिका* — पिउच्छे, एसा खु पज्जलिदे पावए सप्पिणो आहुदी। ताहिं

---

१. क 'उण' इति नास्ति। २. क °वट्टण°।

चिंतिदपुव्वो सो एव्व भट्टिदारिआए अवहोअवेअणाविणोअणो-वाओ समुग्गदो पडिभाइ[1]। [प्रियसखि, एषा खलु प्रज्वलिते पावके सर्पिष आहुतिः। ताभ्यां चिन्तितपूर्वः स एव भर्तृदारिकाया अवहोअ(?)वेदनाविनोदनोपायः समुद्-गतः प्रतिभाति]

*सारिका* — सहि, कहं विअ ? [*सखि, कथमिव ?*]

*मयूरिका* — (*सारिकायाः कर्णे*) एवं विअ[2]। [*एवमिव*]

*सारिका* — (*सशिरःकम्पम्*) सहि, उववण्णं खु एदं। ता साहअ अविलंबिदं अप्पणो समीहिदं। अहं वि जहणिओअं अणुठाइस्सं। [*सखि, उपपन्नं खल्वेतत्। तत्साधयाविलम्बितमात्मनः समीहितम्। अहमपि यथानियोगमनुस्थास्यामि*]

(*इति निष्क्रान्ते*)

॥ प्रवेशकः ॥

(*ततः प्रविशति धारागृहगता सखीभ्यामुपचर्य*[3]*माणा रतिः*)

*रतिः* — (*स्वगतम्*) हिअअ, पहट्ठदिट्ठं वि णंदणुज्जाणे चिरदिट्ठं विअ तं सुहअं उद्दिसिअ किं ति एद्दहं[4] संतप्पसि ? अह जह तह वा तुह पलिणामो होउ। एदिणा दे परिदावेण अदि[5]क्कंददावेण तुइ णिरंतरसंणिहिदस्स तस्स सुउमालपकिदिणो का णु दसा होज्जत्ति पज्जाउल म्हि। [*हृदय, प्रहस्त(?)दृष्टमपि नन्दनोद्याने*

---

१. क पडिभादि। २. क 'एव्वंमिव' इति मू० प्र० पा०। ३. क °चार्यं°। ४. क एविसहं। ५. क 'आदि° इति मू० प्र० पा०।

*चिरदृष्टमिव तं सुभगमुद्दिश्य किमित्येतावत् सन्लपसि ? अथ यथा तथा वा तव परिणामो भवतु । एतेन ते परितापेनाक्रान्ततापेन तव निरन्तरसन्निहितस्य तस्य सुकुमारप्रकृतेः का नु दशा भवेदिति प्रत्याकुलाऽस्मि]*

सख्यौ — पिअसहि, अवि सुहेइ तुमं धाराधरगब्भट्ठिग्रं पच्चग्गविलूणेहिं पल्लवेहिं सज्जीकिदं सअणिज्जं अहिसअंति तक्कालणिप्पीडिएण मलअअरसेण अणुलित्तंगि अ एसो कण्होसीरताडविंतसमीरो ? *[प्रियसखि, अपि सुखयति त्वां धाराधरगर्भस्थितां प्रत्यग्रविलूनैः पल्लवैः सज्जीकृतं शयनीयमधिशयानां तत्कालनिष्पीडितेन मलयजरसेनानुलिप्ताङ्गीञ्चैष कृष्णोशीरतालवृन्तसमीरः ?]*

रतिः — *(अनाकर्णितकेन, स्वगतम्)* कहं णाम सो पिअजणो जस्सि विगलिअवेज्जंतरं अणिसं सुमरिदे वि हिअअस्स होइ ण णिव्वुदिलेसो वि ! *[कथं नाम स प्रियजनो यस्मिन् विगलितवेद्यान्तरमनिशं स्मृतेऽपि हृदयस्य भवति न निर्वृतिलेशोऽपि !]*

सख्यौ — *(सविषादम्)* किं एदं पुच्छंतीणं वि अम्हाणं ण देसि पडिवअणं ? *[किमेतत् पृच्छन्त्योरप्यावयोर्न ददासि प्रतिवचनम् !]*

रतिः — *(श्रुतिमभिनीय)* हला, किं भणाह ? *[हला, किं भणथः ?]*

सख्यौ — *(अवि सुहेईत्यादि पूर्वोक्तं पठतः)*

रतिः — *( सनिःश्वासम् )* हला, तत्तनाराअपंजरम्मि तिक्खणसूईसहस्ससिहरपडिदाए तुसदहणचुंबिदंगीए मह कहं णाम सरोसविसहर-

फुक्कारपवणेण वि सुहं उप्पज्जेउ ? [*हला, तप्तनाराचपञ्जरे तीक्ष्णसूचीसहस्रशिखरपतितायास्तुषदहनचुम्बिताङ्ग्या मम कथं नाम सरोषविषधरफूत्कारपवनेनापि सुखमुत्पद्यताम् ?*]

**सख्यौ** — (सोपालम्भमिव) पिअसहि, कुदो उण अणवेक्खिदगुरुअणा उज्झिअकुलकुमारीजणोइदसमाअरणा[1] दाणि ईरिसी दे ठिदी संवुत्ता ? [*प्रियसखि, कुतः पुनरनवेक्षितगुरुजना उज्झितकुलकुमारीजनोचितसमाचरणा, इदानीमीदृशी ते स्थितिः संवृत्ता ?*]

**रतिः**— (सप्रणयकोपम्) हला, किदं उवदेसेण, आअरह पकिदाणुरूवं। [*हला, कृतमुपदेशेन; आचरतं प्रकृतानुरूपम्*]

**सख्यौ** — (*ससम्भ्रमम्, अन्योन्यं प्रति*) हला, ओणीअमम्मरिदं किसलअसअणिज्जं उवकप्पिदपुप्फतप्पाओ सव्वंगसमप्पिदोसीराणुलेवणं अहिणवुद्धरिआहिं मिणालकणईहिं मंडअंतीओ अंगाइं हिमंबुसेअसिसिरिदेहिं पोम्मिणीपलासेहिं वीअअंतीओ णं उवअरम्ह। [*हला; अपनीतमर्मरितं किसलयशयनीयमुपकल्पितपुष्पतल्पे सर्वांगसमर्पितौशीरानुलेपनमभिनवोद्धृतैः पद्मिनीपलाशैर्वीजयन्त्यावेनामुपचरावः*]

(*इति तथा कुरुतः*)

**रतिः** — (*सपरितापातिरेकम्*) हला, णूणं वज्जलेवकीलिदं मह[2] जीविदं जं एरिसेहिं वि तुम्हाणं पओएहिं णावक्कामई। [*हला; नूनं*

---

१. '°आरणा' इति मू० प्र० पा०। २. क मम।

*वज्रलेपकीलितं मम जीवितम्, यदीदृशैरपि युष्माकं प्रयोगैर्नापक्रामति*]

*एका* — ( *सविस्मयम्* ) हला, कोइलवाणि, अण्णेसु दाव णिम्मिसुएसु अणु[1]रत्ताणं अम्मआणं होउ णाम वम्महो संदावआरी। सस्सिम एव्व णिवद्धहावं वि इमं कहं एसो एवं[2] विसूरेइ[3] ? [*हला कोकिलवाणि, अन्येषु तावत् निःश्मश्रुषु (?) अनुरक्तानामस्माकं (?) भवतु नाम मन्मथः सन्तापकारी। स्वस्मिन्नेव निबद्धभावामपि इमां कथमेष एवं खेदयति ?*]

*अन्या* — सहि कीरवाणि, अहिमदवत्थुणो स[4]हावो खु[5] एरिसो जं अलाहे संदावेइ त्ति। [*सखि कीरवाणि, अभिमतवस्तुनः स्वभावः खल्वीदृशो यदलाभे सन्तापयतीति*]

*रतिः* — (*सरभसोल्लासम्*) हला, तुवरेह रअणासणस्स, एसो खु विण्णादसरीरोवदापउत्तंतो दिअ मह सो पिअजणो संणिहिदो लक्खीअइ[6]। [*हला,त्वरतम्, रत्नासनाय, एष खलु विज्ञातशरीरोपतापोत्तप्त इव मम स प्रियजनः सन्निहितो लक्ष्यते*]

*सख्यौ* — ( *सोद्वेगम्* ) पिअसहि, किदं वामोहेण। कुदो एत्थ कण्णअंतेउरे परकेरस्स पवेसकहा वि ! [*प्रियसखि, कृतं व्यामोहेन। कुतोऽत्र कन्यकान्तःपुरे परस्य प्रवेशकथाऽपि ?*]

*रतिः* — (*सासूयम्*) हला, परकेरआ रई एउ वि[7] तुम्हाणं। [*हला, परकीया रतिरेवमपि युष्माकम्*]

---

१. क र्णिमि अणु°। २. क 'एव्व' मू० प्र० पा०। ३. क विसरेई।
४. क °णो एव्व स°। ५. क 'खु' इति नास्ति। ६. क °अदि।
७. क ईवि।

**सख्यौ** — (स्वगतम्) अम्हो पेम्माणुबंधो एण्हिं एव्व तस्सिं महाभाए पिअसहीए ! [*अहो प्रेमानुबन्ध इदानीमेव तस्मिन् महाभागे प्रियसख्याः !*]

**रतिः** — हला, किं अद्दैतमदाणुपवेसिणीओ तुम्हे जं पच्चक्खदीसंतं विअ संतं कहेह ! [*हला, किमद्वैतमतानुप्रवेशिन्यौ युवां यत् प्रत्यक्षदृश्यमानमपि असन्तं कथयथः !*]

**सख्यौ** — सहि विवेइणि[1], भमकप्पिअं[2]वि वत्थु[3] किं णु सच्चं[4] होइ ! (सरोषमिव) दाणि खु अप्पच्चेअवअणा संवुत्ता अम्हे[5] पिअसहीए । [*सखि विवेकिनि, भ्रमकल्पितमपि वस्तु किन्नु सत्यं भवति ! इदानीं खल्वप्रत्येयवचने संवृत्ते स्वः प्रियसख्याः*]

**रतिः** — (साश्रुपातम्) हला, अवि ण संणिहिदो सो पिअजणो ? ता हद म्हि मंदभाइणी । [*हला, अपि न सन्निहितः स प्रियजनः ! तद्धताऽस्मि मन्दभाग्या*]

(इति मूर्च्छति)

**सख्यौ** — (ससाध्वसोत्कम्पम्, तालवृन्तेन वीजयन्त्यौ) पिअसहि, समस्ससिहि समस्ससिहि । णं देसु चंदिमासीदलाए दिट्ठीए दाणेण पस्सगअं पज्जाउलमणं इमं जणं । [*प्रियसखि, समाश्वसिहि समाश्वसिहि । ननु पश्य चन्द्रिकाशीतलाया दृष्टेर्दानेन पार्श्वगतं प्रत्याकुलमनसमिमं जनम्* ]

**रतिः** — (साश्वासमुन्मीलितलोचना पार्श्वतोऽवलोक्य सखेदम्) हला,

---

१. क विवणइणि । २. क °प्पिदं । ३. क 'वत्थु' इति नास्ति ।
४. 'संचं' इति मू० प्र० पा० । ५. क अह्मो ।

पस्सगअं इमं जणं ति किं मं पदारेह ! ण उण एत्थ सो हिअअ-वल्लहो । [*हला, पार्श्वगतमिमं जनमिति किं मां प्रतारयथः ! न पुनरत्र स हृदयवल्लभः*]

(*इति पुनर्मोहेन निमीलति*)

*सख्यौ* — (*सवैमनस्यम्*) कहं णु एसा समासासणिज्जा ! ण विण्णाअदि खु पिअसहीए अप्पणो विणोअणत्थं सहत्थलिहिअपिअजणपडिल्लंद-सुन्दरं चित्तफलअं पमुद्धाए सारिआए कहिं णिक्खित्तं ति। एण्हि[1] भअवदी चेअ मऊरिआमुहेण विण्णविदसहीविरहउत्तंता इह व्व एदाए वम्महदंसणेण समासासणे सरणं । [*कथं न्वेषा समाश्वासनीया ! न विज्ञायते खलु प्रियसख्याऽऽत्मनो विनोदनार्थं स्वहस्तलिखितप्रियजनपडिल्लंद (?) सुन्दरं चित्रफलकं प्रमुग्धया सारिकया कुत्र निक्षिप्तमिति । इदानीं भगवत्येव मयूरिकामुखेन विज्ञापितसखीविरहवृत्तान्ता इहैव एताया मन्मथदर्शनेन समाश्वासने शरणम्* ]

(*ततः प्रविशति निजचन्द्रशालावातायनस्थो विदूषकेना (णा)-न्वास्यमानः सविरहव्यथो मन्मथः*)

*मन्मथः* — सखे सांख्यायन, विप्रलब्धोऽसि पूर्वेद्युराम्रभोजनसमुत्साहेन, यन्न दृष्टं दर्शनीयं भवता ।

*विदूषकः* — वअस्स, तुए दाव आमस्सणं[2] रुक्खं रुक्खं पडिहिंडंतेन बुभु-[क्] खापरिसुक्कमुहेण समासादिअं सोहिच्चं । [*वयस्य, त्वया तावदाम्रस्यान्नं (?) वृक्षं वृक्षं प्रतिहिण्डता बुभुक्षापरिशुष्कमुखेन समासादितं सौहित्यम्*]

---

१. क 'एण्हिं' इति नास्ति । २. क आमज्झणं ।

*मन्मथः* — किमिह संशयोऽपि ? शरासनोन्मुक्तघुटिकाभिघातनिपातितं रसालफलमादातुमासेदुषा,

**मूर्तेव नन्दनश्रीर्मनोरथस्येव सिद्धिरविलम्बा ।**
**माकन्दं निकषा सा मल्लीव सखे प्रिया ददृशे ॥५॥**

*सख्यौ* — ( *विलोक्य साश्चर्यम्, जनान्तिकम्* ) उवक्कंतं विअ भअवईए अप्पणो भअवदित्तणं । [*उपक्रान्तमिव भगवत्याऽऽत्मनो भगवतीत्वम्* ]

*रतिः* — (*श्रुतिमभिनीय सप्रत्यभिज्ञमिव शनैरक्षिणी समुन्मीलयति*)

*सख्यौ* — (साश्वासम् ) दिट्ठिआ पडिलद्धचेअणा पिअसही । (*अपवार्य*) कहं वा इमाए पिअजणवअणपच्चहिण्णावि । [*दिष्ट्या प्रतिलब्धचेतना प्रियसखी । कथं वाऽनया प्रियवचनप्रत्यभिज्ञापि (?)*]

*विदूषकः* — (*स्वगतम्*) एसो खु जुवरिअस्स हिमंबुसेओ (*प्रकाशम्*) वअस्स, वम्मअस्स तुअ सव्वा वि इत्थिआ लोअणगोअरे गदा सा चेअ। अह व भंतिणिम्मिआ होज्जाइ । [*एष खलु ज्वरितस्य हिमाम्बुसेकः । वयस्य, मन्मथस्य तव सर्वाऽपि स्त्री लोचनगोचरे गता सेव अथवा भ्रान्तिनिर्मिताऽपि भवेत् ।*]

*मन्मथः* — जाल्म, कुतो मे भ्रान्तिः ! तदानीं हि,

**मय्याकस्मिकदर्शने पुलकितप्रस्विन्नसर्वाङ्गकं**
**वक्षोजस्खलदुत्तरीयघटनव्यग्रैकहस्ताम्बुजम् ।**
**अङ्गुल्यग्रगलद्विलूनकुसुमं भूयो विसर्पत् पुन—**
**र्व्यावृत्तस्मितमितेक्षणं च सुचिरं तन्व्याऽवतस्थे तया ॥६॥**

रतिः — (श्रुत्वा ससम्भ्रममात्मनः पूर्वार्द्धेन शयनीयं जहती प्रासादगतं मन्मथमवलोक्य सानन्दं स्वगतम्)

**कंदोट्ट(?)सामलंगो चंदोवमिदेण वअणलोण्णेण ।**
**णंदेइ लोअणं मह णंदेइ इमो मणस्स अ पमोहं ॥७॥**

(प्रकाशम्; सख्यौ प्रति) हला, किं एदं पि वत्थु भमकप्पिदं ?

*[कंदोट्टश्यामलाङ्गश्चन्द्रोपमितेन वदनलावण्येन ।*
*नन्दयति लोचनं मम नन्दयत्ययं मनसश्च प्रमोहम् ॥*
*हला, किमेतदपि वस्तु भ्रमकल्पितम् ?]*

सख्यौ — (जनान्तिकम्) अप्पआसणिज्जो खु एण्हिं चेअ एसो अत्थो ता अणुसरम्हो दाव णं। (प्रकाशम्) पिअसहि, होउ णाम संपदं जहत्थं । *[अप्रकाशनीयः खल्विदानीमेवैषोऽर्थस्तदनुसरावस्तावदेनम् । प्रियसखि, भवतु नाम साम्प्रतं यथार्थम्]*

रतिः — हला, सहावसिणिद्धेण एदिणा महाभाएण दाणिं अम्हघरसविहम्मि[1] विणिम्मिअं मिव सो[2]हंतरं। *[हला, स्वभावस्निग्धेनैतेन महाभागेनेदानीमस्मद्गृहसविधे विनिर्मितमिव सौधान्तरम्]*

सख्यौ — (सावहित्थम्) सहि, तह किल पडिभाइ। *[सखि, तथा किल प्रतिभाति]*

विदूषकः — वअस्स, तह परवसा वि सा सुआदा किं ति तुमए हत्थेण ण

---

१. क 'अम्हघरसहम्मि' मू० प्र० पा० । २. क °णिम्मिदं मिव सा° ।

गिहीदा ? [*वयस्य, तथा परवशाऽपि सा सुजाता किमिति त्वया हस्तेन न गृहीता ?*]

***मन्मथः*** — सखे, किं मामधीरमाशङ्कसे ?

***विदूषकः*** — वअस्स, अदिधीरो एव्व भवं जं पुणो वि मह दिट्ठिगोअरो सि। [*वयस्य, अतिधीर एव भवान्, यत्पुनरपि मम दृष्टिगोचरोऽसि*]

***मन्मथः*** — (*अनुस्मृत्य सोल्लासम्*) सखे, दूरे गिरां हि तद्रूपरामणीयकम्।

**नासाकर्णनिरुद्धलोचनमिथःसीमाक्रमोपक्रमं**
**भूयो जृम्भणकौतुकि स्तनभरापर्याप्तबाह्वान्तरम्।**
**प्रौढारम्भनितम्बनिह्नुततदन्याङ्गावलोकक्रियं**
**तारुण्याद्भुतशिल्पमेव कलये तन्व्या वपुस्तादृशम् ॥८॥**

***विदूषकः*** — वअस्स, अणुराओ एव्व[1] खु वत्थुणो सोंदेरं संपादेइ। [*वयस्य, अनुराग एव खलु वस्तुनः सौन्दर्यं सम्पादयति*]

***मन्मथः*** — मा तावत्। सहजसुभगायास्तस्याः,

**अधरमधुनो लोभात् केशद्वि[2]रेफसमूहतः**
**सरभसविनिर्याता काचित् सखे मधुपावलिः।**
**सरसिजदृशो नासामासाद्य गन्धफलीधिया**
**स्फुरति सभयं द्वेधेव भ्रूमिषादभितः स्थिता ॥९॥**

***रतिः*** — (*सविचिकित्सम्, सख्यौ प्रति*) हला, का णु सा धण्णा तरट्टिआ

---

१. क 'व्व' इति मू॰ प्र॰ पा॰। २. क केशाद्द्वि॰।

जा इमिणा वि महाभाएण एद्दहं प[1]संसीअदि । [*हला, का नु सा धन्या तरट्टिआ (चतुरा ?) याऽनेन महाभागेनैतावत् प्रशंस्यते*]

*सख्यौ* — पिअसहि, सुणुमो दाव एदं, अग्गदो, फुडं होएज्जइ । [*प्रियसखि, शृणुमस्तावदेतदग्रतः स्फुटं भवेत्*]

*विदूषकः* — वअस्स, पिपासिदो विअ कसायं वि सलिलं तं अप्पणो पिअं जणं अदिमेत्तं पसंसंतो मह कोदूहलं उप्पादेसि । ता चित्तफलए आलिहिअ दंसेहि दाव । [*वयस्य, पिपासित इव कषायमपि सलिलं तदात्मनः प्रियं जनमतिमात्रं प्रशंसन् मम कौतूहलमुत्पादयसि । तच्चित्रफलके आलिख्य दर्शय तावत्*]

*मन्मथः* — अस्ति ममाप्येषोऽभिलाषश्चित्रगतामपि चारुगात्रीं[2] भूयः पश्येयमिति । (*नेपथ्याभिमुखमवलोक्य*) कञ्चुकिन्, आनीयतामालेख्यफलकम् ।

(*प्रविश्य*)

*कञ्चुकी* — (*सप्रणामम्*[3]) देव, सज्जमेवेदम् ।

(*इति चित्रफलकं पुरो निदधाति*)

*मन्मथः* — (*विलोक्य*) बालिश, किमालेख्यसनाथमेतदाहर्तुमादिष्टोऽसि ?

*कञ्चुकी* — (*ससाध्वसम्*) क्षमतां देवो देवस्य सामान्येनोपन्यासेनापराद्धोऽस्मि ।

---

१. क °हं वि प° । २. क 'चारुगात्रीं' इति नास्ति । ३. 'सप्रमाणम्' इति मू० प्र० पा० ।

**विदूषकः** — (*सानुनयम्*) वअस्स, पुरिसधम्मो खु पमादो णाम। (*इति चित्रफलकमादाय निरूपयन्*) कहं वअस्सो एव्व एत्थ आलिहिदो ? अत्थि अ अवआसो पस्संतरे विलेहणस्स। [*वयस्य, पुरुषधर्मः खलु प्रमादो नाम। कथं वयस्य एवात्रालिखितः ! अस्ति चावकाशः पार्श्वान्तरे विलेखनस्य*]

**मन्मथः** — कञ्चुकिन्, कुत एतदुपगमः ?

**कञ्चुकी** — (*सविनयम्*) देव, देवोपवनपालकहस्तात्। कथितश्च तेन तत्रभवतो रागस्य कन्यागृहपरिचारिकया सारिकयाऽस्मदुपवनसरसः सरसानि सारसानि मृणालानि मृणालिनीपलाशानि चादाय सरभसं प्रतिनिवृत्तया तत्तीरे निक्षिप्तविस्मृतमिदं मया समासादितमिति।

**विदूषकः** — वअस्स, तक्केमि ताए सामिणो घरे दुआदिसमाराहणा होज्ज त्ति। [*वअस्स, तर्कयामि तस्याः स्वामिनो गृहे द्विजातिसमाराधना भवेदिति*] (*उत्थातुमिच्छति*)

**मन्मथः** — (*स्मयमानस्तमुपरुध्य*) अद्य न किं मृणालान्युपयुज्यन्ते द्विजातिभोजने ? (*कंचुकिनम्प्रति*) भद्र, स्वनियोगमशून्यं कुरु।

**कञ्चुकी** — विजयतां देवः।

(*इति निष्क्रान्तः*)

**विदूषकः** — वअस्स, मह तक्कं पुव्वपक्खं कुणंतस्स तुज्झ को णु सिज्झंतो ? [*वयस्य, मम तर्कं पूर्वपक्षं कुर्वतस्तव को नु सिद्धान्तः ?*]

*मन्मथः* — सखे, जाने कस्यचिदुपतापोपशमार्थोऽयमारम्भ इति ।

*विदूषकः* — जुज्जइ एदं । (*मन्मथप्रतिकृतिं निर्वर्ण्य*) वअस्स, मुणामि एत्थ[1] णअरीए सव्वाणं वि सिप्पिणं णेवुण्णं[2]। अदिट्ठपुव्वा एरिसी सिप्परेहा ता कस्स उण होज्जइ ईरिसं लेहकोसलं ? [*युज्यत एतत् । वयस्य, जानामि; अत्र नगर्यां सर्वेषामपि शिल्पिनां नैपुण्यम् । अदृष्टपूर्वेदृशी शिल्परेखा, तत्कस्य पुनर्भवेत् ईदृशं लेखकौशलम् ?*]

*मन्मथः* — (*विदूषकहस्ताच्चित्रफलकमादाय निपुणमवधारयन् सहर्षरोमांचम्*)

या प्रस्विन्नदशा तनोरिह सखे रोमोद्गमो यः पुन-
र्यत्साचीभवनं दृशोः करशुकग्लानिर्यदेवं क्षुधा ।
या प्राप्ताञ्जनरेखिकाकुटिलता योऽलक्तकाङ्कोऽङ्गुलि-
न्यासोऽमूनि तया वदन्ति सुदृशा लेखं स्वहस्तार्पितम् ॥१०॥

सारिकाहस्तविस्रस्तमिदमित्यनेन तु[3] नेह सन्देहलेशोऽपि[4] ।

*सख्यौ* — (*अपवार्य*) चेडीए अणवहाणं[5] वि अणुउल्लं एव्व णो परिणदं इमस्स महाभाअस्स[6] पिअसहीअणु[7]राअसूअणेण । [*चेट्या अनवधानमप्यनुकूलमेव नः परिणतम्, अस्य महाभागस्य प्रियसख्यनुरागसूचनेन*]

*विदूषकः* — साहु तक्किअं मुसलग्ग (*इत्यर्धोक्ते*) अहो पमादो, कुसग्गमइणा वअस्सेण [*साधु तर्कितं मुसलाग्र....अहो प्रमादः; कुशाग्रमतिना वयस्येन*]

---

१. क 'एत्थ' इति नास्ति । २. क णेउच्छणं । ३. क 'तु' इति नास्ति ।
४ क °स्पन्दोऽपि । ५. क °वाहणं । ६ क 'महाभाअस्स' इति नास्ति ।
७. क °सहीए अण° ।

*मन्मथः* — सखे, सम्प्रति ननु सफलं जन्म मन्मथस्य ।

*विदूषकः* — वअस्स, ठाउ अप्पसंभावणा, आलिहेदु भवं एत्थ अप्पणो पिअदमं । [*वयस्य, तिष्ठत्वात्मसम्भावना, आलिखतु भवानत्रात्मनः प्रियतमाम्*] (*इति तूलिकां समर्पयति*)

*मन्मथः* — सखे, का मम शक्तिः कुरङ्गदृशः सौन्दर्यसर्वस्वमालिखितुम् । अथाप्यनुल्लङ्घ्यवचनो हि भवान् । (*इति रतिप्रतिमां*[1] *विलिखन्*)

**यदेकस्मिन्नङ्गे किमपि लिखितेऽस्या ननु सखे**
**निमग्नं चक्षुर्मे हृदयमपि तत्रैव भवति ।**
**सकम्पस्वेदोऽयं प्रभवति न पाणिश्च सकलां**
**कथङ्कारं बालां कथय विलिखेयं तदधुना ॥११॥**

(*कथञ्चिदभिलिख्य दर्शयति*)

*विदूषकः* — (*विलोक्य सकौतुकमात्मगतम्*)—ठाणे खु इमस्सिं वअस्सस्स अणु[2]राआणुबंधो । (*प्रकाशम्*) वअस्स, जहत्थं कहेहि, किं मह बम्हणीए रूवेण एसा सरिसि त्ति ? [*स्थाने खल्वस्यां वयस्यस्यानुरागानुबन्धः । वयस्य, यथार्थं कथय, किं मम ब्राह्मण्या रूपेण एषा सदृशीति ?*]

*मन्मथः* — (*सस्मितम्*) सखे, रेखामात्रमिदमालेख्यगतं तद्रूपस्य । परथा,

**क्व चक्षुर्लीला सा क्व नु सरसमन्दस्मितकला**
**क्व वाणी वा हृद्या क्व नु च ललितं भ्रूविलसितम् ।**

---

१. क °प्रतिकृतिं । २. क 'अणु' इति नास्ति ।

भवेदालेख्येऽस्मिन् क्व नु मधुरबिम्बाधरसुधा
क्व सौरभ्यं किञ्चाप्यवयवगतं पक्ष्मलदृशः ॥१२॥

सख्यौ — (सोद्ग्रीवमवलोक्य) पिअसहि, विस्सत्था होहि, एदिणा दे दयिदेण तुवं एव वण्णिदा एत्थ आलिहिदा अ । [*प्रियसखि, विश्वस्ता भव, अनेन ते दयितेन त्वमेव वर्णितात्राऽऽलिखिता च*]

रतिः — (*सव्रीलस्मितम्*) हला,[1] किंणेण तक्कालसमस्सासणेण । [*हला, किमनेन तत्कालसमाश्वासनेन*]

सख्यौ — (*जनान्तिकम्*) हुं इमाए जाणिदं एदं संविहाणं । अह वा, अम्हेहिं चेअ अण्णहा तक्किअं होज्जा[2] । (*प्रकाशम्*) सहि, सव्वकालिअं वि[3] होज्जइ । [*आम् अनया ज्ञातमेतत् संविधानम् । अथवा, आवाभ्यामेवान्यथा तर्कितं भवेत्*]

विदूषकः — वअस्स, तुवं[4] दाव अप्पणो पेम्मसरिसं भणसि[5] मह उण पडिभाइ तुह पडिकिदिजोएणव्व एसा मणहरत्ति । [*वयस्य, त्वं तावदात्मनः प्रेमसदृशं भणसि । मम पुनः प्रतिभाति, तव प्रतिकृतियोगेनैवैषा मनोहरेति*]

रतिः — (*स्वगतम्*[6])साहु, कहिदं अज्जेण । [*साधु कथितमार्येण*]

सख्यौ — एसो खु इमस्स सअणम्मि पक्खवादसमुइदो ववहारो । पिअसहीपडिमासणाहस्स महाभाअस्स वि किं ण होउ[7] दंसणिज्जत्तणं । [*एष खल्वस्य स्वजने पक्षपातसमुचितो व्यवहारः ।*

---

१. क 'सव्रीलस्मितं हला' इति नास्ति । २. क होज्ज । ३. क 'वि' इति नास्ति । ४. क तुमं । ५. क भणासि । ६. क 'स्व०' इति नास्ति । ७. क होदु ।

*प्रियसखीप्रतिमासनाथस्य महाभागस्यापि किं न भवतु दर्शनीयत्वम्*]

*मन्मथः* — सखे, तदानीं नन्दनारामतः परदेवताराधनाय जनन्याहूतनिर्गताया न पर्याप्तदर्शनसुखोऽस्मि दयितायाः। (*इति सस्पृहं विलोकयन्*)

अस्याः सखे निरुपमाकृतिदर्शने[1] मे
चक्षुर्दशामभिलषन्त्यखिलेन्द्रियाणि।
आलिङ्गने स्तनभरस्य पुनस्त्वगैक्य-
मास्वादने रसनतामधरामृतस्य ॥१३॥

(*सोत्कण्ठम्*)

कदा पीनोन्नम्रं रहसि परिरप्स्ये(प्स्ये)[2] कुचयुगं
कदा तावत् पास्याम्यधररसमस्याश्च मधुरम्।
रतक्रीडाभूयःश्रमविशिथिलां गात्रलतिकां
कदा क्रोडे कृत्वा सुखमधिशयिष्ये च रजनीः ॥१४॥

*विदूषकः* — वअस्स, उम्मत्तो विअ चित्तगअं[3] पि एदं पच्चक्खं जाणिअ मंतेसि। [*वयस्य, उन्मत्त इव चित्रगतामप्येतां प्रत्यक्षं ज्ञात्वा मन्त्रयसि*]

*मन्मथः* — सखे, कृतमिव शब्दप्रयोगेण।

मधुना रदच्छदजुषा मार्द्वीकरसेन वचसि भरितेन।
तालश्रिया[4]ऽप्युरोरुहतटगतयाऽसौ कथं न मदयेन्माम् ॥१५॥

अपि च, दर्शनात्प्रभृति,

---

१. क °दर्शनं। २. क °रप्स्ये। ३. क °गदं। ४. क °धिया।

व्यानक्तीव सुधाञ्जनेन नयने वक्तीव कर्णे किम-
प्याश्लेषेण दृढेन चन्दनरसं गात्रेष्विवालिम्पति ।
सैषा पाययतीव फाणितरसोदारं स्वबिम्बाधरं
दूरं गाहयतीव हर्षजलधेः पूरं ममेदं मनः ॥१६॥

*विदूषकः* — वअस्स, णं भणामि, एसा चित्तगअत्ति । [*वयस्य, ननु भणामि, एषा चित्रगतेति*]

*मन्मथः* — (*अन्यथा शङ्कमानः सोद्वेगम्*) सखे, कथं चित्तगतैव मे वल्लभा, न पुनश्चित्रगताऽपि । (*इति मूर्च्छति*)

*रतिः* — (*सभयोत्कम्पम्*) हला, परित्ताअह परित्ताअह, मुच्छिदो एव्व इमो महाभाओ । [*हला, परित्रायेतां परित्रायेतां मूर्च्छित एवायं महाभागः*] (*इति मोहमुपगच्छति*)

*सख्यौ* — (*सविषादम्*) एसो खु रक्खाबंधणकम्मम्मि वेदालुग्गमो । [*एष खलु रक्षाबन्धनकर्मणि वेतालोद्गमः*]

*विदूषकः* — वअस्स, समस्ससिहि समस्ससिहि ।

*मन्मथः* — (*समाश्वस्य सनिर्वेदम्*)

अनिन्दुरुचिराननैरनतिकातरालोकनै—
रनिक्षुमधुराधरैरपृथुलस्तनाडम्बरैः ।
असंशयितमध्यमैरजघनप्रथीयः[1]क्रमै—
रहंसगतिभिः सुखैरलममन्मथोन्मादकैः ॥१७॥

*सख्यौ* — पिअसहि, समस्ससिहि, समस्ससिहि । एसो दे पिअजणो लद्ध-

१. क °प्रतीप° ।

चेअणो भविअ किं वि मंतेइ। [*प्रियसखि, समाश्वसिहि, समाश्वसिहि। एष ते प्रियजनो लब्धचेतनो भूत्वा किमपि मन्त्रयति*]

*रतिः* — (*लब्धसंज्ञा*) अम्हहे, पच्चागअजीविओ एण्हि सअलो वि जीवलोओ। [*अहो, प्रत्यागतजीवित इदानीं सकलोऽपि जीवलोकः*]

*सख्यौ* — (*अपवार्य*) अम्हो भअवईए जोअमाहप्पं जं रच्छंतरे परोक्खणिव्वुत्तं त्ति एदं सव्वं एत्थ पच्चक्खं विअ अम्हेहिं अणुहवीअदि। [*अहो भगवत्या योगमाहात्म्यं यद् रथ्यान्तरे परोक्षनिवृ तमप्येतत्सर्वमत्र प्रत्यक्षमिवास्माभिरनुभूयते*]

विदूषकः — (*सोपहासम्*) वअस्स, अणदिक्कंतमुद्धभावाए तत्तहोदीए उत्ताणेहिं[1] वि विब्भम्मेहिं कहं एद्दहं प्पज्जूसुओ सि? [*वयस्य, अनतिक्रान्तमुग्धभावायास्तत्रभवत्या उत्तानैरपि विभ्रमैः कथमेतावत्पर्युत्सुकोऽसि?*]

*मन्मथः* — (*सस्मितमात्मगतम्*) सत्यमनूचानश्रोत्रिय एवायम्।

लीढालीढरदच्छदं नवभवद्वक्षोजकोशार्पित—
व्यक्ताव्यक्तनखक्षतं प्रतिकलोदञ्चन्निषेधक्रियम्।
मुक्तामुक्तवलग्ननीविनहनं साध्वं मृदूपायतो
लज्जाकुड्मलितेक्षणं च कृतिना लभ्येत मुग्धारतम्॥१८॥

(प्रकाशम्) सखे, न जाने कुतो देशिकादभ्यस्तं वा कुवलयदृशा तावदीदृशं संवननकला[2]कौशलम्। यतः

---

१. क 'उत्ताहणेहिं' मू॰ प्र॰ पा॰। २. क 'कला' इति नास्ति।

वसन्तः शीतांशुर्मलयपवमानः परभृताः
शुका भृङ्गा माल्यं मधु मलयजं पङ्कजसरः ।
कलं गीतं लास्यं प्रमदवनमन्यच्च सकलं
प्रतीपं मे जातं ननु वत ममैवोपकरणम् ॥१९॥

*विदूषकः* — वअस्स, को अण्णो देसिओ होउ तुज्झ पिअमित्तादो तत्तहोदीए किअपदादो जोव्वणादो । [*वयस्य, कोऽन्यो देशिको भवतु तव प्रियमित्रात् तत्रभवत्यां कृतपदात् यौवनात्* ]

*रतिः* — ( *स्वगतम्* ) महाभाअस्स अप्पकेरो वि अणुजीविवग्गो एव्वं संवुत्तो । किं भणिदव्वं मारिसीए पडिऊलो[1]त्ति । [*महाभागस्यात्मनोऽप्यनुजीविवर्ग एवं संवृत्तः । किं भणितव्यं मादृश्याः प्रतिकूल इति*]

*सख्यौ* — असरिसो णं पम्मुद्ध कुलकुमारीअणे एव्वं णिव्वादारोवो । [*असदृशो ननु प्रमुग्धकुलकुमारीजने निर्वादारोपः*]

*मन्मथः* — अतस्तावत्,

दावं हृद्यमवैमि चन्दनरसाच्चण्डातपं चन्द्रिका-
पूरात् किञ्च सुराधिपप्रहरणं श्रीखण्डशैलानिलात् ।
कुन्ताग्रैः कृतमास्तरं विचकिलस्तोमादिदानीं सखे
मृत्युं जीवनतोऽप्यलब्धदयिताश्लेषप्रमोदादहम् ॥२०॥

*रतिः* — ( *स्वगतम्*[2] ) पडिहदममंगलं पडिहदममंगलं । महाभाअ, मह मंदभाइणीए किदे तेल्लोक्कमंगलस्स वि अप्पणो ण एव्वं अणिट्ठासंकी होउ भवं । [*प्रतिहतममङ्गलम्, प्रतिहतममङ्गलम् ।*

---

१. क उल्लोत्ति । २. क आत्मगतम् ।

*महाभाग, मम मन्दभाग्यायाः कृते त्रैलोक्यमङ्गलस्याप्यात्मजो नैवमनिष्टाशङ्की भवतु भवान्]*

*सख्यौ* — हद्धि हद्धि परिदावणिव्वेदाणं अदिसओ। [*हा धिक्, हा धिक् परितापनिर्वेदयोरतिशयः*]

*विदूषकः* — वअस्स, तुवं दाव जाए[1] किदे एव्वं उत्तम्मसि, ण जाणीअदि से केरिसी दस त्ति! [*वयस्य त्वं तावद् यस्याः कृते एवमुत्ताम्यसि न ज्ञायते तस्याः कीदृशी दशेति!*]

*मन्मथः* — सखे, तर्क्यत एव, मदनुमानेन प्रियाया अपि परितापातिभूमिः।

*रतिः* — (*आत्मगतम्*) साहु, समत्थिअं[2] पकिदिकोमलेण महाभाएण। [*साधु, समर्थितं प्रकृतिकोमलेन महाभागेन*]

*सख्यौ* — किं ण कहिदं अज्जाए वसिणीए पिअसहीपज्जाउलत्तणं महाभाअस्स? [*किं न कथितमार्यया वशिन्या प्रियसखीपर्याकुलत्वं महाभागाय?*]

(*ततः प्रविशति[3] वशिनी*)

*वशिनी* — (*स्वगतम्*) सम्प्राप्ताऽस्मि केनाप्यलक्षिता कुमारस्य सौधम्। आदिष्टं मे भगवत्या सर्वार्थसाधिकया। यथा, वत्से, रतिविरहदूनहृदयं कुमारमन्मथं[4] तदनुरागख्यापनेन समाश्वासयेति। (*पुरोऽवलोक्य*) एष कुमारो नर्मसचिवेन सह किमपि सल्लपन् शयनमध्यास्ते। अहो वियोगव्यथापारवश्यमेतस्य!

---

१. क ताए। २. क मतिअ (अं ?)। ३. 'प्रविशयति' मू० प्र० पा०। ४. क कुमारं म°।

क्षामापाण्डुवपुः प्रतान्तनयनः प्रत्यूषचन्द्रानन-
श्चिन्ताव्याकुलधीः किमप्यशिशिरा निःश्वासधाराः सृजन् ।
प्रस्वेदी धृत[1]वेपथुः सपुलको रम्यारण्यलं विह्विषन्
शून्यं मन्त्रयते वहत्यनुकलं मूर्च्छां पुनश्चेतनाम् ॥२१॥

दर्शयाम्यस्मै तावदात्मानम् । *(इत्युपसर्पति)*

*विदूषकः* — *(विलोक्य)* वअस्स, पकिदित्थो होहि[2] । एसा खु अज्जा वसिणी आअच्छइ । [*वयस्य, प्रकृतिस्थो भव । एषा खल्वार्या वशिन्यागच्छति*]

*मन्मथः* — *(सहर्षम्[3])* कथं प्राप्ता भगवत्याः प्रियान्तेवासिनी वशिनी ! *(उत्थाय साञ्जलिबन्धम्)* आर्ये, स्वागतं भवत्यै । इत आस्यताम् । *(सर्वे उपविशन्ति)*

*विदूषकः* — *(उत्तरीयपल्लवेन चित्रफलकं निह्नुते)*

*वशिनी* — अपि कुशलं कुमाराय ?

*मन्मथः* — इदानीमार्याया दर्शनेन ।

*सख्यौ* — दिट्ठिआ विट्ठिव्वकाले उवट्ठिआ अज्जा । [*दिष्ट्योपस्थातव्यकाल उपस्थिताऽऽर्या*]

*मन्मथः* — आर्ये, इयं हि पङ्गोर्निजाङ्गण एव गगनगङ्गालहरीविहृतिः !

*वशिनी* — कुमार, अनुपपन्ना तावदुत्पन्नसौहृदं जनं प्रत्युपचारोक्तिः ।

---

१. क पृथु° ।   २. क 'होही' मू० प्र० पा० ।   ३. क 'सहर्ष' इति नास्ति ।

*मन्मथः* — आर्ये, अप्युररीकृता भगवत्या मन्त्रिणो वसन्तस्य विज्ञप्तिः ?

*वशिनी* — कुमार, न केवलमूरीकृता भगवत्या, दिष्टया च मया[1] तथा संसाधिता यथेदानीं महाभागा,

जानीते न कृताकृतं दिनविधौ तं चाचरत्यन्यथा
पृष्टैकं प्रतिवक्ति चान्यदितरद्दत्ते परं याचिता ।
व्यत्यस्तामपि कञ्चुलीं स्तनतटे धत्ते तथाऽलङ्कृतिं
भाति प्रस्तुतसाहितीव सुभग त्वल्लीनचेता रतिः ॥२२॥

किञ्च[2]

ध्यानेनोत्पुल[3]काङ्गमाक[4]लितया सप्रेम ते वार्तया
स्वैरं दिक्षु दशस्वपि प्रतिमया स्तब्धेक्षणं दृष्टया ।
यामार्धार्धतदर्धतर्कितभवत्सम्प्राप्तिसौख्याशयाऽ—
प्यस्त्यप्रोषितचे[5]तना मृदुतनुर्लावण्यशेषैव सा ॥२३॥

रतिः — (*स्वगतम्*) अणुअंपिदम्हि अज्जाए । [*अनुकम्पिताऽस्म्यार्यया*]

*मन्मथः* — आर्ये, अनेन ते वचनेन सानुरागामस्मासु जानीमो भवत्सखीम् ।

*वशिनी* — कुमार, न केवलं सानुरागा, सोपतापातिशया च[6] । तथाहि,

लक्ष्वाथं चरणार्पणेन सुदृशो वा[7]पीजलं क्षीयते
भूयो मर्मरितच्छदं वनलताः शुष्यन्ति दृग्गोचराः ।

---

१. क मया च । २. क 'किञ्च' इति नास्ति । ३. °नोत्पल° इति मू० प्र० पा० । ४. क °काङ्क्षिताक° (?) । ५. क °प्यस्मत्प्रेषितचे° । ६. क °तापा च । ७. क सुतनोर्वा° ।

निश्वासश्वसनैर्दलन्ति शतधा केलीमहीभृच्छिलाः
सोऽयं त्वत्परिरम्भणं बत विना तापः कथं शाम्यतु ॥२४॥

उपचर्यमाणा च सख्या सुमुखी ब्रवीति—

किं दावेन निषिञ्चसि प्रतिकलं वज्रैः कुतो हंसि मां
व्यालैर्वेष्टयसे कथं निदधसे किं खड्गधारास्तरे ।
नेष्टं[1] ते मम जीवितं ध्रुवमुत प्राप्यापि[2] तावत्कृतं
पापायां[3] प्रयतस्व तत्प्रियसखि स्वेच्छानुरूपं मयि ॥२५॥ इति

*मन्मथः* — धिक् कष्टम्, परां कोटिं गतस्तापः शिरीषकुसुमसुकुमारैः सुतनोरवयवैः कथं सोढव्य इति व्यथते मे चेतः ।

*विदूषकः* — वअस्स, मा विहत्थो होउ भवं सोदव्वसेसं वि सुणुमो[4] । [*वयस्य, मा विहस्थो भवतु भवान्, श्रोतव्यशेषमपि शृणुमः*]

*वशिनी* — प्रत्युद्याति तवागम[5]भ्रमवशाद् ब्रूते पुनः स्वागतं
सोत्कण्ठं परिरिप्सते चरणयोः सन्नह्यति[6] क्षालने ।
दत्ते चासनमासितुं जनयति द्राक् तालवृन्तानिलं
सा हा हन्त नितान्तरूढविरहक्लान्तान्तरङ्गा सखी ॥२६॥

*विदूषकः* — वअस्स, जितं अम्हेहिं । [*वयस्य, जितमस्माभिः*]

*मन्मथः* — सखे,

अनुरागातिशयं मयि ननु बुद्ध्वाऽऽनन्दमग्नमपि तावत् ।
सीदतितरां[7]मनो मे सुदृशो विरहव्यथां विचिन्त्येमाम् ॥२७॥

---

१. क 'नष्टं' मू० प्र० पा० । २. 'प्राप्पापि' (?) मू० प्र० पा० ।
३. 'पापायाः' मू० प्र० पा० । ४. क सुणेमि । ५. क नवागत° ।
६. क ह्यती । ७. क °ति नितरां ।

*सख्यौ* — पिअसहि, अवि सुदं तुए सोदव्वं, दिट्ठं अ दट्ठव्वं, विण्णादं अ विण्णादव्वं। ता पज्जवट्ठावेहि अप्पाणं [*प्रियसखि, अपि श्रुतं त्वया श्रोतव्यम्, दृष्टञ्च त्वया द्रष्टव्यम्, विज्ञातञ्च विज्ञातव्यम्? तत्प्रत्यवस्थापयात्मानम्*]

*वशिनी* — कुमार, तदेवमन्योन्यानुरक्तयोर्वामवश्यम्भात्री[1] समागमः।

*मन्मथः* — आशीरियमार्यायाः।

*विदूषकः* — (*वारुणीं दिशमवलोक्य*) वअस्स, अणुजाणाहि मं संझोवासणस्स। [*वयस्य, अनुजानीहि मां सन्ध्योपासनाय*]

*मन्मथः* — कथमुपनतः सायंसमयः! (*निरूप्य*)

**आरक्तया नितान्तं संरक्तस्येह पद्मिनीकमितुः।**
**स्पृहये दिशा प्रतीच्या सम्बन्धा[2]यानुरूपाय ॥२८॥**

*विदूषकः* — वअस्स, णं उव एत्थ पमदवणलीलाथेरोसणसरम्मि तम्मंतस्स चक्कवाअमिहुणस्स दुप्पेक्खं अवत्थंतरं। [*वयस्य, ननु पश्य, अत्र प्रमदवनलीलास्थविरासनसरसि ताम्यतश्चक्रवाकमिथुनस्य दुष्प्रेक्ष्यमवस्थान्तरम्*]

*मन्मथः* — (*विलोक्य, सकरुणम्*)

**कासारे विसिनीदलैर्व्यवहिते किञ्चिन्मिथो दर्शने**
**यद् दैन्येन विरौति धावति पतत्यावेपते मूर्च्छति।**
**तत्तादृग् बत चक्रवाकमिथुनं दीर्घां वियोगव्यथां**
**नक्तं हन्त नयन्निदं हतविधिर्मुच्येत वाच्यात् कथम् ॥२९॥**

---

१. '°श्यभावी' मू० प्र० प्रा०। २. क संबाधा°।

विदूषकः — (*स्वगतम्*) किदं णेण वअस्सस्स पुणो वि उक्कंठाकालणेण पसंगेण । (*प्रकाशम्*) वअस्स, उवट्ठाणसमओ खु दे, ता संभावेसु तुज्झ अवसरपडिवालणपरं सअलं सामाजिअं लोअं । [*कृतमनेन वयस्यस्य पुनरप्युत्कण्ठाकारणेन प्रसङ्गेन । वयस्य, उपस्थानसमयः खलु ते । तत्सम्भावय तवावसरप्रतिपालनपरं*[1] (*त्वामेव प्रतिपालयन्तं*) *सकलं सामाजिकं लोकम्*]

*मन्मथः* — आर्ये, उपास्या नन्वत्रभवत्याऽपि[2] पितृप्रसूः ।

*वशिनी* — साधयतु कुमारः समीहितसिद्धये ।

(*निष्क्रान्तो मन्मथः सह विदूषकेण*)

*वशिनी* — (*विदूषकाङ्कविभ्रष्टं चित्रफलकमादाय, स्वगतम्*) अयं हि सस्यनिष्पत्तये क्षेत्रकर्षिणो निधानलाभः, यत्कुमाराश्वासनप्रवृत्तया समासादितः सख्या रत्याः[3] प्राणनोपायः[4] । तदिदं मयूरिकाहस्तेन तस्यै प्रापयिष्यामि । अतिवर्तते मे सन्ध्योपास्तिः[5] ।

(*इति निष्क्रान्ता*)

रतिः — (*निरूप्य*) हद्धि, हद्धि[6] । कहं ण दीसइ महाभाओ ? (*साश्चर्यम्*) पासादो वि हला किं एदं ! [*हा धिक्, हा धिक् ! कथं न दृश्यते महाभागः ? प्रासादोऽपि हला किमेतत् !*]

---

१. ख °संभावेहि तुमं एव्व पडिवालअंतं । २. क ख 'अपि' इति नास्ति ।
३. क रत्याश्च । ४. ख °पायश्च । ५. ख °ध्यासमयः । ६. क हद्धी हद्धी ।

**सख्यौ** — पिअसहि, किं अण्णं तुह विणोअणप्पउत्तादो भअवईए पहावादो। [*प्रियसखि, किमन्यत्तव विनोदनप्रवृत्ताद् भगवत्याः प्रभावात्*]

**रतिः** — (*सास्रम्*) हला[1], किं मिच्छासमासासणो[2] मह इमो[3] ? [*हला, किं मिथ्यासमाश्वासनो (°नोपायो) ममायम् (ममैषः)*]

(*इति मोहमुपगम्य भूम्यां निपतति*)

**सख्यौ** — (*विविधं शिशिरोपचारमाचरन्त्यौ सखेदम्*) कहं चिरेण वि एसा सण्णं ण लहइ[4] ? किं दाणिं कादव्वं। किं वा[5] एत्थ समस्सासणं[6] होएज्जइ ? [*कथं चिरेणाप्येषा संज्ञां न लभते ! किमिदानीं कर्तव्यम् ! किं वाऽत्र समाश्वासनं भविष्यति !*]

(*इति चिन्तां नाटयतः*)

(*प्रविश्य*)

**मयूरिका** — अज्जाओ, एदं खु भट्टिदारिआपरिदावणिव्वावइत्तअं होज्जत्ति अज्जाए वसिणीए मह हत्थे दिण्णं। [*आर्ये, एतत् खलु भर्तृदारिकापरितापनिर्वापयितृ भविष्यतीत्यार्यया वशिन्या मम हस्ते दत्तम्*]

(*इति चित्रफलकमर्पयति*)

---

१. क 'हला' इति नास्ति। २. क ख °सणोवाओ। ३. क ख एसो।
४. ख लहेइ। ५. ख 'वा' इति नास्ति। ६. ख समासासणं।

सख्यौ[1]— हंजे साहु समाअरिअं सामिणीए समाराहणं। (रतिं प्रति) पिअसहि, समस्ससिहि, समस्ससिहि। सच्चो एव्व संजादो दे समासासणोवाओ[2]। [हंजे, साधु समाचरितं स्वामिन्याः समाराधनम्। प्रियसखि, समाश्वसिहि, समाश्वसिहि सत्य एव संजातस्ते समाश्वासनोपायः]

रतिः— (समाश्वस्य) हला, कहिं सो महाभाओ? [हला, क्व स महाभागः?]

सख्यौ— पिअसहि, एत्थ एव्व संणिहिदो। [प्रियसखि, अत्रैव सन्निहितः]। (इति चित्रफलकं दर्शयतः)

रतिः— (तदादाय निरूपयन्ती) हला, मह्च्चेअ खु एदं चित्तफलअं। [हला, ममैव खल्वेतच्चित्रफलकम्]

सख्यौ— आं पिअसहि, दाणिं उण अत्थि एत्थ को वि अदिसओ। [आं प्रियसखि, इदानीं पुनरस्त्यत्र कोऽप्यतिशयः]

रतिः— केरिसो सो? (इति निपुणं निरूप्य, स्वगतम्) धण्णा खु ममादु एसा पडिकिदी जा महाभाअस्स हत्थफंससंभावणाभाअणं जादा। (प्रकाशम्) हला, अहं दाव आलिहिदम्हि? [कीदृशः सः! धन्या खलु ममैषा प्रतिकृतिर्या महाभागस्य हस्तस्पर्शसम्भावनाभाजनं जाता। हला, अहं तावदालिखितास्मि!]

सख्यौ— सोहेइ किदपडिकिदं पिअसहीए तस्स अ महाभअस्स। [शोभते कृतं प्रतिकृतं प्रियसख्यास्तस्य च महाभागस्य]

---

१. ख मयू०। २. क समस्सा°।

**रतिः**— (*सौत्सुक्यं मन्मथप्रतिच्छन्दमवलोकयन्ती*) कहं एत्थ आणंद-बाहुप्पीलो मे पडिपक्खो हुवइ ? [*कथमत्रानन्दबाहूत्पीडो मे प्रतिपक्षो भवति ?*]

**सख्यौ** — (*रतिप्रतिकृतिं निर्वर्ण्य*) अम्हो भावालेक्खकुसुलदा महाभा-अस्स जं पुप्पाइं ओचिण्णती तहरूवे व्व आलिहिदा पिअसही। [*अहो भावालेख्यकुशलता महाभागस्य, यत्पुष्पाण्यव-चिन्वती तथारूपैवालिखिता प्रियसखी*]

**रतिः** — (*आलेख्यमन्मथं प्रति सोपालम्भम्*) अइ हिअअपाडच्चर, णं[1] गहीदो भवं ! [*अयि हृदयपाटच्चर ननु गृहीतो भवान्*]

**सख्यौ** — (*सपरिहासम्*) एव्वं वि णाम एदिणा णिव्वुदा होउ पिअसही। [*एवमपि नामैतेन निर्वृता भवतु प्रियसखी*]

**रतिः** — (*चित्रफलकं हृदये कृत्वा प्रमोदस्तिमिताऽवतिष्ठते*)

(*प्रविश्य*)

**सारिका** — अज्जाओ, एसा खु अज्जू आअण्णिदभट्टिदारिआसरीरोवदाव-उत्तंता[2] इदोमुहं आअच्छइ। [*आर्ये, एषा खल्वार्याऽऽकर्णित-भर्तृदारिकाशरीरोपतापवृत्तान्ता इतोमुखमागच्छति*]

**रतिः** — (*ससंभ्रमं गात्रापनीतशिशिरोपकरणा*) कहं अज्जू सअं एव्व आअदा[3] ? हला ता अम्हे एव्व अगदो भविअ णं संभावेम्ह।

---

१. क 'णं' इति नास्ति। २. क °दाउत्तंता। ३. क अज्ज सअं एव्व आगदो।

[कथमार्या स्वयमेवागता ! हला, तद्, आवामेवाग्रतो भूत्वा तां सम्भावयावः]

(इति निष्क्रान्ताः सर्वे)

इति जगन्नाथपण्डितकृतौ रतिमन्मथनाम्नि नाटके द्वितीयोऽङ्कः[1] ॥



१. क 'द्वितीयोऽङ्कः' इति मात्रं लिखति । इतोऽग्रे मूलपाण्डुग्रन्थे 'श्रीदेव्यर्पणमस्तु । श्रीरस्तु ।' इति लिखति ।

# अथ तृतीयोऽङ्कः

(¹ततः प्रविशत्यासनस्थः प्रजागरक्लान्तलोचनः किमपि चिन्तयन् वसन्तः)

वसन्तः — (स्वगतम्) अहो महत्त्वपर्यवसायी केवलं मन्त्रिभावः । परथा,

आशङ्क्यः प्रभुराश्रवोऽप्यवहितेनाराध्यमन्तःपुरं
मान्यस्तत्प्रणयी जनो व्यवसितं ज्ञेयं स्वरन्ध्रैषिणाम् ।
सान्त्व्याः शस्त्रभृतः प्रवृत्तिरभितः श्राव्या चरा वेदिता
वेद्यौ[2] च व्ययसङ्ग्रहौ वत पदं सौख्याय किं मन्त्रिणः ॥१॥

( सानुस्मरणम् ) सूक्तमिदं नयविदा कविना । यथा,

स राजा यस्त्यक्तव्यसनमखिलां शास्ति जगतीं
स मन्त्री यो राज्ञो हितमथ च लोकस्य तनुते ।
स सेनानेता यः समिति भटसाह्याय घटते
स सभ्यो यो वक्ति प्रियमपि सभायां समुचितम् ॥२॥

अपि च,

यत्रास्ति प्रभुशक्तिमान्न नृपतिर्नीतिप्रवीणो न वा
मन्त्री किञ्च परस्परोपकरणस्निग्धा न सामाजिकाः ।

---

१. इतः पूर्वं मू० पुस्तके 'श्रीदेव्यै नमः' इति लिखति । क 'श्रियै नमः' इति लिखति । २. मूलपुस्तके 'निजान्यविषयोदन्तोऽत्रधार्यः समालोच्यौ' इति लिखित्वा ( ) इति दत्वा च निषिध्यति ।

सेनानीर्न जयी यथास्मृति वदन् न प्राड्विवाकः कुलो-
त्पन्ना नाधिकृताश्च तत्र सुधियो वस्तुं न राज्ये क्षमम् ॥३॥

( *सविमर्शम्* ) गृहीतभृतेः किमनतिगताध्वनो वीवधभारनिर्वेदेन। इदमिदानीमवश्यनिर्वोढव्यमापतितम्। यत् किल,

सामान्येन विशेषतश्च नगरीसौधे वने नन्दने
दृष्टायां दृढरूढरागविवशो रत्यां विभुर्मन्मथः।
तल्लाभाय निरन्तरोपचितया क्रोडीकृतश्चिन्तया
भक्तैरप्यधुनाऽस्मदादिभिरहो भृत्यैर्न सन्तुष्यति ॥४॥

श्रुतं हि भगवत्यन्तेवासिन्या वशिन्याः सकाशाद् रतिरतितरामनुरक्ता स्वामिनि मन्मथ इति। औपयिकस्तावदनयोरन्योन्यव्यतिकरः।

रज्यत्युत्पलिनी क्व शीतकिरणं हित्वा स वा तां पुन-
र्वासन्ती सहकारभूरुहमनुप्राप्यौचितीं विन्दति।
सम्बन्धो नलिनीनिदाघमहसोः श्लाघास्पदं जायते
दाम्पत्यञ्च परस्परानुगुणयोः स्त्रीपुंसयोर्युज्यते ॥५॥

दित्सिता च पितृभ्यां भगवदुपेन्द्रानुप्रहितस्य तत्रभवतो[1] वाचस्पतेर्वाचा रतिः स्वामिने सुमधन्वने। निवेदिता तु मह्यमभितः प्रवृत्त्युपलम्भाय गूढमनुसञ्चरद्भिश्चरैरेतत्प्रतिकूलाऽपि वार्ता। यथा, शम्बरासुरार्थे[2]रतिमर्थयितुं तत्पितुरन्तिकं भार्गवान्तेवासी बाष्कलः समाजगाम। तेन च सौम्यकन्याभिमतो वर एवेष्यतेऽस्मत्कुल इति दत्तनास्तिपर्यायोत्तरो विमना एव प्रतिनिववृत[3]

---

१ क भगवतो। २. क °सुरार्थं। ३. क °निवृत्त इति।

इति। अतो दुस्तरशाम्बरीकं शम्बरमसुरमन्तरायं चिन्तयन्न निर्वृणोमि। यदि वा, न ह्यवग्रहसम्भावनया काले नारभ्या कृषिः, सरघाशङ्कया वा मधु नासाद[1]नीयम्। निर्वेदमन्तरा वस्तुनि प्रयतमानस्य सिद्धिरविसंवादिन्येव भवति। किञ्च, लोकैकधनु[2]र्धरस्य स्वामिनस्तावदीषत्करः शम्बरनिग्रहः। इदं पुनरन्यदपरिहार्यमुपस्थितं कार्यमत्या[3]हितमिव प्रतिभाति। यत् पद्मयोनिवरास्कन्दितविबुधसद्मभिः शूरपद्मादिभिरसुरैः पराजित-स्तुषाराट् सुराचार्येण[4]समं सम्मन्त्र्य दुर्वृत्तनिग्रहनिरवग्रहशक्तेः सेनान्यः प्रादुर्भावाय निश्चितमतिस्तुषारधरणिभृति कुतोऽपि हेतोस्तपस्यन्तं भगवन्तमन्तकान्तकं शि (शु) श्रूषमाणया शैल-दुहित्रा संयोजयितुमेतदलङ्कर्मीणे स्वामिन्यनुजतनुजे स्वस्य निधास्यमानभरः[5] सातिशयममून् वासरानस्मिन्नादरं दर्शयति। (*विचिन्त्य ससाध्वसोत्कम्पम्*)

**यस्यालीयत कण्ठसीम्नि सहसा हालाहलं दुस्सहं**
**दर्पान्धस्त्रिशिखेन्धकोऽपि चरणाङ्गुष्ठे स लङ्केश्वरः।**
**वैधात्रं च शिरः करे क्रुधि यमो हासे पुराणां त्रयं**
**तेजोराशिरसौ कथं नु भगवान् जय्यो ललाटेक्षणः॥६॥**

(*विमृश्य*) धिक् कष्टस्तावदनुजीवित्वेऽपि शस्त्राजीवभावः।

**महोत्सेधः सौधो मधुरवयसः सारसदृश-**
**स्तथाऽपथ्यं हृद्यं तुलितनरवाहश्च विभवः।**
**वपुः सल्लावण्योदयमधिगतारोग्यमथ च**
**क्षणेनैव स्वीयं न हि विधृतशस्त्रस्य किमपि॥७॥**

---

१. क नासाध°। २. क लोके धनु°। ३. क °हार्यं कार्यमुपस्थितमत्या°।
४. क षाडाचार्येण। ५. क °भारः।

अथवा, किमनयाऽनिष्टशङ्कया मे। परदेवताप्रसाद एव स्वामिनः श्रेयः समग्रयिष्यति। (*दिशोऽवलोक्य*) अहो, निरन्तरयाऽनयैव चिन्तया मे प्रभाता विभावरी। अधुना हि,

वरुणस्य दिशि प्ररूढरागं पतिमालोक्य रुषेव रात्रिरेषा।
विजहाति हि तारहारभूषां ननु सापत्न्यकमक्षमा निदानम्॥८॥

किञ्च,

दूरोत्क्षिप्तमिवैतदम्बरतलं दीर्घा इवेमा दिशो
विस्तीर्णेव वसुन्धरा सरणयः प्रत्यग्रसृष्टा इव।
चक्षुष्मन्त इवाधुना तनुभृतः प्राप्ते जगच्चक्षुषि
प्राचीनं धरणीधरं नवमिवाशेषं जगद्भासते॥९॥

जाने तावत्,

निद्रामन्थरतारमंसविगलद्धम्मिल्लभारं स्तन-
प्रभ्रश्यद्वसनाञ्चलं दरगलन्नीवि स्फुरज्जृम्भिकम्।
उत्कूजन्मणिभूषणञ्च शयनादुत्थातुकामः शनै-
रेणाक्ष्योऽद्य समेधयन्ति[1] सुरतोत्कण्ठां पुनः प्रेयसाम्॥१०॥

(साश्चर्यम्)

नक्तं प्राप्तदशा[1]विपर्ययममी संत्यज्य पद्माकरं
याताः स्वैरमसंस्तुता इव पुनः क्वापि द्विरेफादयः।
सम्प्रत्येष दलत्सरोजसुभगः सम्भूय तैः ख्यापित-
स्वातन्त्र्यैरुपभुज्यते ननु जनः सर्वः श्रियो बान्धवः॥११॥

---

१. क प्राप्य दशा°।

सम्प्रत्यहमपि निर्वर्तितसान्ध्यविधिः प्रतिपालयामि स्वामिन उपस्थानसमयम्। (*इत्यभ्यन्तरं प्रविशति*)

(*प्रविश्य*)

*कञ्चुकी* — (*सनिर्वेदमात्मगतम्*) धिग् जन्म परपिण्डोपजीविनाम्?

**यद्वश्येन्द्रियवर्गता दृढतरो यश्चेतसः संयमो**
**यन्निद्राशनयोर्मितिर्यदपि वा भोगेषु नातिस्पृहा।**
**यच्चान्तःपुरचारिणां प्रतिकलं हा संशयः प्राणने**
**यद्येतद् भविता निवृत्तिविषये कोऽन्योऽस्तु धन्यस्ततः ॥१२॥**

(*साधिक्षेपम्*) अलमात्मम्भरेस्तावद् भस्मशायिनः शुन इव क्षणमनेन मे बोधाभासेन। यावदनुतिष्ठामि स्वामिन[1] आदेशम्। (*अग्रतोऽवलोक्य*) इदममात्यवसन्तभवनम्। (*प्रवेशं नाटयन् सर्वतश्चक्षुः प्रचार्य*[2]) अहो, अधिकारगौरवं मन्त्रिणः!

**सभ्यास्तावदितो वसन्त्यधिकृताः सर्वे स्वदन्ते ह्यतः[3]**
**सेनान्यस्त्विह भान्ति सन्ति शतशश्चात्रापि[4] दूत्ये रताः।**
**अन्यैः कार्यवशागतैश्च सुतरां[5] बाह्याङ्क(ङ्ग)णं सङ्कुलं**
**साम्राज्यं सचिवो बिभर्त्यधिभुवः श्वेतातपत्रं विना ॥१३॥**

(*अनिवारित एव कक्ष्यान्तरगतं वसन्तमुपसृत्य सप्रणामम्*) अमात्य, पुरुहूतसमाहूतः स्वामी तत्र[6]भवन्तं दिदृक्षते।

*वसन्तः* — भद्र, सज्जा एव वयं त्वत्प्रतीक्षाः स्मः[7]। (*इति कंचुकिना सह निष्क्रान्तः*)

(*शुद्धविष्कम्भकः*)

---

१. क 'स्वामिन' इति नास्ति। २. क प्रसार्य। ३. क ततः। ४. क °स्तत्रापि। ५. क परितो। ६. क °मात्य पुरुहूतो देवस्तत्र°। ७ 'स्मः' इति मू० पा० नास्ति।

*(ततः प्रविशति वसन्तेनानुगम्यमानो मन्मथो मितश्च परिजनः[1])*

***मन्मथः*** — ( *आत्मगतम्* ) अये, न मनीषितसमय[2]सुलभानि श्रेयांसि नाम । यन्मां रतिञ्च परस्परानुरक्तौ श्रुतवता गुरुजनेन निश्चितेऽप्यचिरनिर्वर्तनीये पाणिग्रहणमङ्गले तावदिदमावश्यकमपरकार्यमापतितम् ।

अतश्च,

**एकतः स्वामिसत्कारैः परतः प्रेयसीगुणैः ।**
**कृष्यमाणमिदं द्वेधा मम डोलायते[3] मनः ॥१४॥**

( *सखेदम्* ) भवतु मन्दभाग्यस्य मन्मथस्यैवमुपतापनैरन्तर्यम् । मम कृते नितान्तदूयमानस्वान्तां पुनः कान्तामनुस्मृत्य सन्तापमनुभवामि ।

**दक्षा वा दवपावकोष्मसहने दीना[4]कुरङ्गाङ्गना**
**वार्तायामपि वैद्युतस्य महसः का हन्त वासन्तिका[5] ।**
**पात्रं कैरविणीनिदाघमिहिरक्रूरातपस्यापि किं**
**सोढैतस्य[6] कथं मुहूर्तमपि वा विश्लेषतापस्य सा ॥१५॥**

(*विमृश्य*) का नाम परवतः सुखाभिलाषिताऽपि ? ( *प्रकाशम्* ) मन्त्रिन् पूर्वेद्युर्निशीथिन्यामधि[7]गते तातस्य मरुत्वतश्चिकीर्षिते कथमद्य प्रातरेवामुष्य स्मरणीयोऽस्मि ?

---

१. क 'शुद्धविष्कम्भः, ततः प्रविशति वसन्तेनानुगम्यमानो मितश्च परिजनः' इति नास्ति । २. क 'समय' इति नास्ति । ३. क °यितं । ४. क °ष्मविहृते-दीना° । ५. क नार्हा लता माधवी । ६. क °ढा हन्त । ७. क °द्युरेव रजन्यामधि° ।

*वसन्तः* — स्वामिन्, अदीर्घसूत्रता हि कर्तव्येषु प्रभविष्णूनामर्थसिद्धेरवश्यम्भावः। अपि तु, सम्भावितानर्थेऽस्मिन्नर्थे स्वामिनं नियुयुक्षमाणेन सहस्राक्षेण स्वार्थपरता केवलमाविष्कृता।

*मन्मथः* — मन्त्रिन्, नैवमवगन्तव्यम्।

उक्तमनुक्तं वा ननु साध्यं वाऽसाध्यमीश्वरस्य कृते।
अर्हं यदि वाऽनर्हं कार्यं कार्यं हितेन भृत्येन ॥१६॥

किञ्च,[1]

वाहा गन्धवहातिशायितरसा दानोद्धुराः सिन्धुरा
वित्तं[2]स्वाश्रितदैन्यहारि सरसाभोगाश्च भोगाश्चिरम्।
मानश्चातिशयीति लभ्यमखिलं यस्मादिह स्वामिन-
स्तस्यार्थेऽप्यनुजीविभिः कियदिदं त्याज्या यदेषा तनुः ॥१७॥

*वसन्तः* — (*सविनयम्*) साधु समनुशिष्टं स्वामिना।

*मन्मथः* — (*परिक्रम्य*) इदं तावन्माहेन्द्रं मन्दिरं यावत् प्रविशामि।
(*इति वसन्तेन सह प्रवेशं नाटयति*)[3]

*वसन्तः* — (*सभां निर्वर्ण्य साद्भुतं स्वगतम्*)

इतो देवैः सर्वैरिह पितृभिरत्रर्षिभिरितः
फणीन्द्रैर्भूपालैरित इह च गन्धर्वपतिभिः।
इतो रम्भाद्याभिर्ललितललनाभिः सुतनुभिः
सुधर्मा निर्मोति प्रमदमधिकं मे नयनयोः ॥१८॥

---

१. क 'किञ्च' इति नास्ति। २. क चित्तं। ३. क 'मन्मथः''''प्रवेशं नाटयति' इति पर्यन्तं नास्ति।

(*पुरोऽवलोक्य*) एष देवो महेन्द्रः सर्वैः सुपर्वभिर्यथोचितमुपास्य- मानो वाचस्पतिना सह सल्लपन् सिंहासनमध्यास्ते। (*सबहुमानम्*) अहो, महाभाग्यमेतस्य !

**स्वाराज्यं दिविषन्नराहिभुवनोत्तंसीकृताज्ञाक्षरं**
**सम्पत्तिः स्ववशीभवत्सुरगवीचिन्तामणिस्वर्द्रुमा।**
**किञ्चापूर्णशताश्वमेधयजनैर्दुःसाधमेवं पदं**
**कस्यैतादृगपौरुषेयवचनोद्गीतं[1] यशश्चैधते ॥१९॥**

(*ततः प्रविशति यथानिर्दिष्टो महेन्द्रो विभवतश्च परिवारः*)

*महेन्द्रः* — (*उपनमन्तं मन्मथमवलोक्य, वाचस्पतिं प्रति*) भगवन्,

**शतशोऽपि दृष्टविजयं सर्वासाध्याय कर्मणे वत्सम्।**
**आदिशतो गिरिशे मे यत्सत्यं किमपि शङ्कते चेतः ॥२०॥**

*वाचस्पतिः*— सदृशमीदृग्वचस्ते[2]ऽनुजनन्दने वात्सल्यस्य। अथ च दुरासदो भगवान् पुराणामरातिः। अपि तु, सूच्यते करगता कार्यसिद्धि- रमुष्य समुत्साहेन। तन्निर्वृणोतु भवान्।

*वसन्तः* — (*निरूप्य ससम्भ्रमम्*) स्वामिन्नेष देवो महेन्द्रः स्वभावनिर्निमेषैरपि स्तिमितोदञ्चिततारकतया प्रेमातिशयं पिशुनयद्भिः सहस्रेणापि लोचनैरापिबन्निव स्वामिनमवलोकते। (*मन्मथः सरभसमुपसृत्य वाचस्पतिमहेन्द्रौ प्रणमति*)

*उभौ* — (*सस्नेहगौरवम्*) विजयतां भवान्।

---

१. क °नोद्दीप्तं। २. क सदृग्वचस्ते।

**मन्मथः** — (*महेन्द्रदृग्वलननिर्दिष्ट आसने समु[1]पविश्य वाचस्पतिं प्रति*) भगवन्, भ्रू किङ्करीभूतभूर्भुवःस्वस्त्रितयप्रवीरस्य निरन्तरोर्जस्वल-निजतेजोऽनलशलभायितससंरम्भजम्भनमुचिविरोचनपुलोमबल--वृत्रादिशात्रवनिकरस्यापि तातस्य कुलिशायुधस्य किमर्थमयं स्मृतिकर्मीभूतो नियोज्यकोटिचरमकोटि[2]निविष्टो जनः ।

**वाचस्पतिः**— (*सपरितोषम्*) कुमार, समुचितैव भवतो ज्यायसि पितरि विनयातिशयमेदुरा[3] गिरां परिपाटी तावदियम् । अपि तु,

**वैजयन्तो जयन्तोऽथ शचीगार्हस्थ्यसम्पदे ।**
**अस्य त्रैलोक्यराज्यश्रीर्भवद्वीर्यनिबन्धना ॥२१॥**

पश्य,

**चक्रं तत् क्रमते[4] न यत्र घटते दम्भो न दम्भोलिगः**
**पाशो नेङ्गति पाशिनः पितृपतेर्दण्डो न चोद्दण्डति ।**
**दुस्साधे ननु यत्र कर्मणि भवन्मुक्तैः प्रसूनैः शरै-**
**रेकद्वैरपि शान्तशात्रवमदो वृत्रारिरानन्दति ॥२२॥**

**मन्मथः** —(*सव्रीडमिव*) भगवन्, प्रभवन्ति हि प्रभवो भृत्यबहू[5]पकरणे । किन्तु,

**पुरस्कृतस्यात्मसमानसन्निधौ निजोपजीव्येन विधेयगौरवात् ।**
**भवेदसंसाधितवस्तुनो न किं ह्रियेऽर्थवादोऽपि कुलप्रथाजुषः ॥**

**महेन्द्रः** — वत्स, अनितरसाध्यतया त्वमेव सकललोकशिवङ्करे कर्मणि[6] समुत्सृष्टवात्सल्यं नियोक्तव्योऽसि ।

---

१. क °सन उप° । २. क 'शात्रव' इत्यत आरभ्य कोटि' पर्यन्तं नास्ति । ३. क °दुराणां । ४. क नस्क्रमते । ५. क भृत्यस्य बहू° । ६. क °करकर्मणि ।

*मन्मथः* — ( *सप्रश्रयम्* ) तात, अनियन्त्रणनियोगो हि स्वामी नियोज्येषु ।

कं वा ते परिपन्थिनं युधि शरैर्दर्पोद्धुरं शाययै
कस्याद्य क्रियतां चिराय विषयव्यासक्तम[1]न्तर्मुनेः ।
आकीटात् पुनरासरोरुहभवात्को वा शरव्यं न मे
ताताज्ञापय मा चिरं किमधुना कुर्यामहं त्वत्प्रियम् ॥२४॥

*महेन्द्रः* — वत्स[2], शिवयोरपत्येन समुत्पत्स्यमानेन सुनिग्रहाः श्रूयन्ते शूरपद्मादयः सर्वे[3] सुपर्वारातयः । अतस्तथा प्रयत्यतां वत्सेन यथा प्राञ्चौ दम्पती क्षणमप्यसोढविरहमन्योन्यं संयुज्येयाताम् ।

*मन्मथः* — तात, अपि दंशमशकम्, अपि वीरुद्द्रुमं[4] संयोजयतस्तातनियोज्यस्य कियदेतन्नाम यत्पुनः स्त्रीपुंसौ लब्धसन्निकर्षौ संयोजयित[5]व्याविति ।

*महेन्द्रः* — ( *सानन्दम्* ) वत्स, एवम्प्रभाव एव भवान् । किन्तु दुःसहतेजसि निटिलेक्षणे वत्सेन भृशमवहितेन भवितव्यम् ।

*मन्मथः* — यथा नियोजयति तातः ।

*वाचस्पतिः*— कुमार, प्रशस्तमिदं विजयप्रयाणाय धनुर्लग्नं पश्यामः ।

*मन्मथः* — ( *सोल्लासम्* ) भगवन्, एष सज्ज एवास्मि । (*इत्युत्तिष्ठति*)

*महेन्द्रः* — (*सगौरवम्, स्वाङ्गा[6]वतारितानि दिव्यान्याभरणानि वासांसि च मन्मथाय वितीर्य* )

---

१. क °व्यावृत्यम° । २. क 'वत्स' इति नास्ति । ३. क 'सर्वे' इति नास्ति ।
४. क तात अपि विरुद्रुममपि दंशमशकं । ५ योजित° । ६. क स्वाङ्गादव° ।

साधय साधय कार्यं सौपर्वं भवतु ते शिवः पन्थाः ।
वितरतु सा कल्याणी कल्याणं वत्स सम्प्र[1]यातस्य ॥२५॥

*मन्मथः* — (*सप्रणामं वसन्तेन सह निष्क्रान्तः*)

*महेन्द्रः* — भगवन्, ईदृशे कर्मणि वत्सं नियुञ्जानोऽसन्निहितं सम्प्रत्यश्रावितवृत्तान्तं चानुजन्मानमुपेन्द्रं किं वा प्रतिवक्ष्यामि ?

*वाचस्पतिः*— महेन्द्र, अभिमतं हि भगवतोऽप्युपेन्द्रस्य तदिदमखिलभुवनभद्रङ्करं कार्यम् । अथ पुनरेतादृश एव निर्ममो राज्ञां धर्मः ।

भृत्यो यदि वाऽमात्यो भ्राता वा भ्रातृजः स्वपुत्रो वा ।
यो यत्र कर्मणीष्टे तस्मिन् राज्ञा ह्यसौ नियोक्तव्यः ॥२६॥

(*नेपथ्ये महान् कलकलः*)

*वाचस्पतिः*— (*श्रुत्वा*) महेन्द्र, यथाऽयं तूर्यकाहलीशङ्खदुन्दुभिस्वनो[2]न्मिश्रः कोलाहलः समुज्जिहीते तथा तर्कयामि कुमारस्य सेनया सन्नद्धया भवितव्यम् ।

*महेन्द्रः* — कः कोऽत्र भोः !

(*प्रविश्य*)

*दौवारिकः*— (*सप्रणामम्*) देव, अयमहम् ।

*महेन्द्रः* — भद्र, समादिश्यन्तां जङ्घाकरि[3]काश्चाराश्च, प्रस्थितस्य वत्सस्य प्रवृत्तिः प्रतिकलमानेतव्येति ।

---

१. क वत्स ते प्र° । २. क °भिन्निस्वनो° । ३. क °कारि° ।

**दौवारिकः**— यदाज्ञापयति देवः। (*इति निष्क्रम्य जाङ्घिकाभ्यां सह प्रविश्य*) देव, कुमारमनु प्रहितेषु वार्ताहरेषूपावृत्ताविमौ।

(*जङ्घाकरिकौ*[1] *प्रणमतः*)

**महेन्द्रः** — (*दौवारिकं प्रति*) भद्र, त्वमेवमेव नियोगमनुतिष्ठ।

(*दौवारिको निष्क्रान्तः*)

**वाचस्पतिः**—(*जाङ्घिकौ प्रति*) कथयतं यथादृष्टं कुमारस्य प्रस्थानवृत्तम्[2]।

**प्रथमः** — (*साञ्जलिबंधं संस्कृतमाश्रित्य*) अवदधातु देवः। देव, गृहीतदेवनिदेशे पुनरप्रविष्टनिजभवनमप्रतिपालितानुयात्रिकं चाधिरूढयानकी(के)शूरे[3](?)कुमारे नगरान्निष्क्रामति मन्त्रिणो वसन्तस्य दृक्पातमात्रप्रधावितैर्वेत्रपाणिभिः[3] संत्वर्यमाणायां कृताकृतसन्नाहमभिपतन्त्यां पृतनायाम्,

**मदामोदभ्रा[4]म्यन्मधुकरकुलैर्दन्तिपटलै-**
**रुदङ्घ्रि त्वङ्गद्भिर्जित[5]पवनवेगैश्च तुरगैः।**
**शताङ्गैरुत्तुङ्गैर्विलसदसिखेटैरपि भटै-**
**र्धरित्री द्यौराशान्तरमपि तिरोधायि सकलम्॥२७॥**

**महेन्द्रः** — अस्तु[6] तावदेतत्सकलमहे[7]श्वरसाधारणम्। निवेदयतं वत्सविजयमूलस्य मौलस्य बलस्य[8] समारम्भम्।

**द्वितीयः** — सुणादु देव्वो।

---

१. क °कारिकौ। २. क °यतं दृष्टं कुमारस्य वृत्तान्तम्। ३. क °यानकरीरे। ४. क °मोदो भ्रा°। ५. क °मित°। ६. क अस्ति। ७. क °सकलं महे°। ८. क मौल्यस्य बलस्य।

मलअ[1]समीरो माहवणिसा णिसेसो अ सुअपिभलिल्ला ।
मोरा कलहंसा सुरसारसणेत्ता अ सरहसं चलिआ ॥२८॥

*शृणोतु देवः,*
*मलयसमीरो माधवनिशा निशेषश्च शुकपिकभ्रमराः ।*
*मयूराः कलहंसाः सुरसारसनेत्राश्च सरभसं चलिताः ॥]*

*महेन्द्रः* — ( *सस्मितम्* ) भगवन्, संगृहीतमनेन ।

*वाचस्पतिः* — भद्रौ, सविशेषं वर्णयतम् ।

*प्रथमः* — आलिङ्गन् नवमालिकामपनयन् यूनोः श्रमाम्भःकणान्
भृङ्गीनामपि शिक्षयन्नविकलां सङ्गीतभङ्गीं कलाम्[2] ।
चौली[3]मौलिपिनद्ध[4]मुग्धवकुलस्रग्गन्धमुष्टिन्धयः
श्रीखण्डाचलबान्धवो विवलते[5] धीरः समीरः पुरः ॥२९॥

*वाचस्पतिः*— नासीरवीरः खल्वेष कुमारस्य ।

*महेन्द्रः* — ततस्ततः ।

*द्वितीय* — देव्व, णवरि अ,

पासादसअणसुहआ पसण्णचंदा पमंदगंधवहा ।
संभिअजुवलीलाओ सुरहिणिसाओ समुग्गआ सरसा ॥३०॥

[*देव, अनन्तरम्,*
*प्रासादशयनसुभगाःप्रसन्नचन्द्राः प्रमन्द*[6]*गन्धवहाः ।*
*सम्भृतयुवलीलाः सुरभिनिशाः समुद्गताः सरसाः ॥]*

---

१. क ख मलय° । २. क ख °भङ्गीकलाम् । ३. क चौले, ख चोली ।
४. ख °निबद्ध° । ५. ख विलसते । ६. ख °प्रमद° ।

*प्रथमः* — जीवातुस्त्रिदिवौकसां जलनिधेर्मंदस्करो मानिनी-
मानोन्मूलनकार्मणं[1] कुमुदिनीहासैकवैहासिकः।
ध्वान्तोच्चाटनमान्त्रिकोऽम्बरसरस्सीमामरालो जग-
न्नेत्रानन्दरसायनं विजयते राकानिशाकामुकः ॥३१॥

*वाचस्पतिः*— प्रियसुहृत् किलासौ कुमारस्य ।

*महेन्द्रः* — ततस्ततः ।

*द्वितीयः* — तदो अ,

पक्खेहिं हरिदेहिं पवालसरिसेण चंचुभाएण ।
पमदालावकलाहिं पमदं कीरा कुणंति कूजाहिं[2] ॥३२॥

*[ततश्च,*
*पक्षाभ्यां हरिताभ्यां प्रवालसदृशेन चञ्चुभागेन ।*
*प्रमदालापकलाभिः प्रमदं कीराः कुर्वन्ति कूजाभिः ॥]*

*प्रथमः* — उत्तालाः कुरविन्दपाटलदृशामुन्निद्रनीलोत्पल-
स्निग्धानां सहकारपल्लवलवग्रासोल्लसच्चेतसाम् ।
उन्मीलन्ति समन्ततः श्रुतिसुखाः स्पर्धीभवत्पञ्चमाः
स्वच्छन्देन कुहूः कुहूरितिमुहू रम्याः पिकानां[3] गिरः ॥३३॥

*वाचस्पतिः*— एताः खलु कामुकमनोमृगाकृष्टिकिरातगीतयः ।

*महेन्द्रः* — ततस्ततः ?

*द्वितीयः* — देव्व, अणंतरं अ ।

---

१. ख °कारणं। २. क कीराण कुणंति जाहिं। ३. ख कपीनां।

महुरसपाणपमत्ता महुरं परिदो वि भं कुणंतीओ ।
वम्महबलसामग्गीवढ्ढणकुसला भमंति भमरीओ ॥३४॥

[देव, अनन्तरञ्च ।
*मधुरसपानप्रमत्ता मधुरं परितोऽपि झंकुर्वन्त्यः ।*
*मन्मथबलसामग्रीवर्धनकुशला भ्रमन्ति भ्रमर्यः ॥*]

*प्रथमः* — वर्हैः केरलकामिनीकचरुचामर्हैश्चमूमुल्लस-
न्मायूरातपवारणोच्चयपरिष्कारां समातन्वती[1] ।
केकाभिर्जयकाहलीसमधुरग्रीवोद्गताभिर्मुहु-
र्दिक्चक्रं निरुणद्धि मुग्धनटनोदारा मयूरावलिः ॥३५॥

*वाचस्पतिः*— वेधसः सृष्टिवैचित्र्यसमष्टिर्नन्वेषा ।

*महेन्द्रः* — ततस्ततः ?

*द्वितीयः* — देव्व, णवरि अवि,

पअडिअचामरसोहा पक्खेहिं सोणचंचुचलणंता ।
गमणोवदेसगुलुणो तरुट्टिआणं पुरट्टिआ हंसा ॥३६॥

[देव, अनन्तरमपि,
*प्रकटितचामरशोभाः पक्षाभ्यां शोणचञ्चुचरणान्ताः ।*
*गमनोपदेशगुरवस्तरुणीनां पुरः स्थिता हंसाः ॥*]

*प्रथमः* — तत्तादृककुशिकात्मजव्रतविधिव्यासेधिका मेनका
दासीभूतपुरूरवास्त्रिभुवनेऽप्यन्यादृशी चोर्वशी ।
लङ्कानायकशापमूलललितारम्भा च रम्भा हृत-
स्थेमा किञ्च तिलोत्तमा दितिजयोः सुन्दोपसुन्दाख्ययोः ॥३७॥

---

१. क न्वतीम् ।

एताभिः पुनरन्येन च सुरवारस्त्रैणेन ।

खेलत्कुण्डलमाकुलाकुलमणीहारं क्वणत्क[1]ङ्कण-
श्रेणीनूपुरमेखलं चलकुचं वल्गन्नितम्बस्थलम् ।
अन्योन्यं मणिदण्डिकाहतिवलन्नेत्रारविन्दाञ्चलं
प्रक्रान्तं यमिनो मनोऽपि हरते हल्लीसकक्रीडितम् ॥३५॥

**वाचस्पतिः**— अमोघान्यस्त्राणि तावदमूनि कुमारस्य ।

**महेन्द्रः** — ( *सोल्लासम्* ) सम्प्रति कतरस्मिन् प्रदेशे कुमारः ?

**द्वितीयः** — देव्व, कोसमेत्तव्ववहिदे गिरिसस्समे कुमालेण अब्भणुण्णादा अम्हे खु पडिणिवुत्ता[2] । [*देव, क्रोशमात्रव्यवहिते गिरिशाश्रमे कुमारेणाभ्यनुज्ञातावावां खलु प्रतिनिवृत्तौ*]

**वाचस्पतिः**—(*उभाभ्यां वीटिकां[3] प्रदाप्य[4]*) भद्रौ, विश्राम्यतम्[5] ।

(*जाङ्घिकौ निष्क्रान्तौ*)

**महेन्द्रः** — भगवन्, स्थाण्वाश्रमस्य सन्निहितं वत्समुपश्रुत्य किमपि व्यथते मे हृदयम् ।

**वाचस्पतिः**— महेन्द्र, एतादृगेव[6] ममतास्वभावः । भयस्थानञ्च भगवतो भूतपतेराश्रमः।

(*प्रविश्य पटाक्षेपेण*)

---

१. क रणत्क° । २. क °णिवुत्ता ख 'णिवुत्ता' । ३. क वीटीं । ४. क प्रदाय । ५. क विश्राम्यताम् । ६. ख °दृश एव ।

*प्रतिहारी*[1] — देव, दीयन्तामितश्चक्षूंषि । एष खलु[2],

चूषन्नम्भांसि सिन्धोः सपदि विदलयन्नश्मनो भूधराणां
कुर्वन्नुर्वीं विशुष्कक्षितिरुहनिवहां द्यां विशीर्णां वितन्वन् ।
ज्वालाभिः प्रोज्ज्वलाभिः किमपि चटचटात्कारिणीभिः समन्ता-
द्रुन्धानो वैधमण्डं हरिति धनपतेरेधते हव्यवाहः ॥३८॥

*महेन्द्रः* — (*साशङ्कम्*) भगवन्, नूनमनेनातिशयिततेजोऽन्तरोष्मणा शुष्मणा[3] त्रिलोचनविलोचनोद्गतेन भवितव्यम् । किमवस्थो मे[4] वत्सः स्यात् ! (*इति वैक्लव्यं नाटयति*)

*वाचस्पतिः* — महेन्द्रः, कुतः स्वेनैव वितर्केण पर्याकुलो मुह्यसि ? मयाऽपि दृष्टसामुद्रिकलक्षणो दीर्घायुषः कुमारस्य कथं घटेत तावदत्याहितशङ्काऽपि !

(*नेपथ्ये*)

वियदध्वचारिणः सिद्धाः, अहो भगवत्याः सर्वार्थसाधिकायाः सर्वपथीना मन्मथश्रेयःसाधकता !

दृष्ट्वा मन्मथमात्तकार्मुकशरं क्रुद्धस्य यावत्पुर-
द्रोग्[5]धुश्चक्षुरुदञ्चितो हुतवहः कोऽप्यापतत्यञ्जसा ।

(*इत्यर्धोक्ते*)

*महेन्द्रः* — (*सोद्वेगम्*) भगवन्, किंपर्यवसानो भविष्यति वा वाक्यशेष इति प्रमुग्धोऽस्मि !

---

१. क प्रतीहारी, ख प्रतीहरी । २. ख 'एष खलु' इति नास्ति । ३. क ख 'शुष्मणा' इति नास्ति । ४. ख वा मे । ५. क °पुरं, ख पुरां भेद्रो ।

*वाचस्पतिः*— महेन्द्र[१], कृतमनिष्टैकशङ्किना वात्सल्येन। श्रेयःसाधकता[२] यावदापतति वाक्याभ्यां शुभोदर्क एवैष[३] प्रतीयते।

(*पुनर्नेपथ्ये*)

**आविर्भूय तदा सलीलममृतेश्वर्या विधूतस्मयः**
**प्रत्यावृत्य पुन स्वयं स हि निजे स्थाने समालीयत[४] ॥४०॥**

*वाचस्पतिः*— महेन्द्र, इदानीमपि तावद् विस्रब्धो भव।

*महेन्द्रः* — (*हर्षातिशयमभिनयन्*) भगवन्, सिद्धवचनमेतदद्धैव[५]। कुतस्तु पुनः कुमारसकाशाच्चिरायापि चरयोरनागमनम् ?

*वाचस्पतिः*—(*प्रश्नाक्षराणि गणयित्वा*) महेन्द्र, सन्निहितावेव जानीहि चरौ।

(*ततः प्रविशतश्चरौ*)

*प्रथमः* — (*संस्कृतमाश्रित्य*)वर्धतां देवः।

*द्वितीयः* — कुमालवम्महविअएण। [*कुमारमन्मथविजयेन*]

*प्रथमः* — देव, अयं च[६] मन्त्रिणा वसन्तेन भगवते वाचस्पतये लिखतः कर्मीकृतो[७] लेखः। (*इति पत्रिकासम्पुटं पुरतो[८] निधायापसर्पति*)

*महेन्द्रः* — (*वाचस्पतिमवलोकते*)

---

१. क 'महेन्द्र' इति नास्ति। २. क °धना। ३. ख एवेति। ४. क °लीयते। ५. क °मेतत् तथैव। ६. ख 'च' इति नास्ति। ७. क कर्णीकतः। ८. ख पुरो।

**वाचस्पतिः**— ( *गृहीत्वा सम्पुटमुद्घाटय्य पत्रिकां वाचयति* ) स्वस्ति समस्त-सुरमस्तकमणिस्तोमदीधितिपुञ्जरञ्जितचरणेभ्यो गुरुचरणेभ्यो[१]-ऽन्तेवासिनो वसन्तस्य निटिलतटस्पृष्टभूतलं प्रणतयस्तदनन्तरा[२] च विज्ञप्तिः। कुशलमत्र तत्रभवतां च, तन्नः[३] सन्देश्यम्, वेद्यञ्च। निवेदितचरः स्यादा[४]राध्यचरणेभ्यो जङ्घाकरि[५]काभ्यामनुहिमवदुपत्यकमस्म[६]दीयस्कन्धावारविनिवेशः[७]।

ततश्चानुसायमुदञ्चता चकोर[८]कुटुम्बसौहित्यनाडिन्धमचन्द्रिकापूरपरिपूरितहरिदन्तरेण निजसखसाहायकनिस्तन्द्रेण चन्द्रेण निरन्तरफुल्लसन्तानकहरिचन्दनमन्दारप्र[९]भृतिवृन्दारकतरुवृन्द-कुसुमसौरभसारभरस्तेयधीरेण मलयसमीरेण निखिलप्रपञ्चवञ्चनचणपञ्चमस्वरप्रपञ्चनसमुत्सुकैः पिकैः अमन्दमकरन्दरसनिष्यन्दमधुरिमधुरीणझङ्कृतिपरैर्मधुकरैरुल्लसितभ्रूवल्लिवेल्लितमुत्तरङ्गापाङ्गविभ्रममधर[१०]किसलयविसरन्मन्दहासमनुकलतरलताटङ्कमणिविभाविभासितगण्डमण्डलमीषदपसरदुत्त[११]रीयाञ्चलस्फुटोपलक्ष्यमाणवक्षोज[१२]तटप्रेङ्खोलितमौक्तिकहारमाविष्कृताङ्गहारमुत्क्वणत्कनककङ्कणश्रेणिसमधिकवल्गन्नितम्बबिम्बवाचालकाञ्चीगुणकिङ्किणीकमुन्मिषन्मञ्जुलमञ्जीरशिञ्जितमङ्गीकृतमधुरसङ्गीतलास्यमकिञ्चिदुदञ्चित[१३]किलिकिञ्चितविवशीभवदकिञ्चन-शमधनान्तः[१४]करणैरप्सरोगणैश्च परित्याजितयमनियमादिक्रिया-

---

१. क 'गुरुचरणेभ्यो' इति नास्ति। २. ख °यः तदनुसारिणी। ३. क 'तन्न' मू० प्र० पाठश्च। ४. क °वेदितचरणस्यादा°। ५. क °कारि°। ६. ख °त्यकं अस्म°। ७. क ख °रनिवेशः। ८. ख °मुदञ्चिता चकोर°। ९. ख °रकप्र°। १०. क °पाङ्गमधर° ख °मधुर°। ११. क °मीषदुत्तरीयां°। १२. क °लक्ष (क्ष्य?) वक्षोज°। १३. ख °दुदन्वित°। १४. °धानान्तः° मू० प्र० पा०।

परिश्रमं श्रीमतः श्रीकण्ठस्या[1]श्रमं यावदाबद्धपरिकरः प्रविशति कुमारस्तत्रान्तरे (इत्यर्द्धोक्ते)

*महेन्द्रः* — भगवन्, भगवतो[2] भर्गस्य कोपानलप्रशमादुत्तरं[3] सन्दर्भं वाचय।

*वाचस्पतिः* — (*तथा करोति*) अथ च भगवन्,

**नयनार्चिषा विजेतुं ननु मामुदयुङ्क्त धूर्जटिरिति[4] द्राक्।**
**शूरस्तं हि विजिग्ये स्मरः शिवायाः कटाक्षविशिखेन ॥४१॥**

*महेन्द्रः* — (*सोल्लासम्*) समुचितं हि कृतप्रतिकृतं वत्सस्य। ततः[5]।

*वाचस्पतिः* — अनन्तरञ्च तत्रभवन्, अन्तिकजुषि शैलदुहितरि जनितरागातिभूमेरिन्दुचूडस्य सन्देशादुमां वरीतुमुपनतान् वसिष्ठादीन् मुनीन् वरिष्ठानभिनन्दता गिरीन्द्रेण समहोत्सवमोषधिप्रस्थं नगरमानीय यथाविधि प्रतिपादितायां देव्यां निजनिवासं कैलासमासेदुषः सविलासमुपसेदुषश्च शुद्धान्तमन्तकजेतुरनुमतः कुमारमन्मथ[6]कर्तृकः सेवाविधिः। श्रूयते चैवमिदानीम्,

**सोत्कण्ठं नयनैस्त्रिपञ्चभिरपि प्रत्यङ्गमुद्वीक्षिता**
**संश्लिष्टा दशभिर्भुजैश्च नवयोर्वक्षोजयोः पेशलम्।**
**आपीताधरपल्लवे च सदयोल्लासं मुखैः पञ्चभिः**
**पत्युः प्रीणयते मनोऽनुरहसे[7] हृष्टा गिरेर्नन्दना ॥४२॥**

विज्ञाप्यते च प्रिय[8]सहचरीं विजयां द्वारीकृत्य भक्तजनेन[9] भवानी। यथा,

---

१. ख शितिकण्ठस्या°। २. ख 'भगवतो' इति नास्ति। ३. क °प्रशमनादुत्तरं। ४. ख चन्द्रचूड इति। ५. क ख ततस्ततः। ६. ख 'मन्मथ' इति नास्ति। ७. क °रहसं। ८. क प्रिया°। ९. क भजनेन।

मा देहि द्वार्यनुज्ञां क्षणमिव सविधाभ्यागमे पश्य मा तं[1]
मा सम्भ्राम्य प्रणामेऽप्यनुनयवचसा[2] मा स्म तावत्प्रसीद ।
पत्यौ शीतांशुमौलौ ननु जननि सकृन्मानमादत्स्व सोऽयं
वेत्तु स्वस्मादुपात्तं जगति तनुभृतां प्रार्थनाभङ्गखेदम् ॥४३॥

तदित्थमत्रभवदनुग्रहेण संसिद्धात्मनिदेशस्य[3] कुमारस्य विजयेनाभि[4]नन्द्यो देवो[5] देवाधिराजः । उदन्तशेषस्तु कुमारमन्मथेन सन्दिष्टश्चारमु[6]खादवगन्तव्य इति ।

*महेन्द्रः* — ( *सानन्दबाष्परोमाञ्चम्* ) प्रियं नः, प्रियं नः ।

*वाचस्पतिः*— भद्रौ, वाचिकं निवेदयतम् ।

*प्रथमः* — देव, विज्ञप्तं हि[7] कुमारे यावदभ्यनुज्ञमिहैव पितृष्वसुरन्तिके निवसन्नागमिष्यामि तातचरण[8]चरणारविन्दमूलमिति ।

*द्वितीयः* — देव्व, लद्धकुमाराणुण्णेहिं केलासादो पडिणिवुत्तेहिं वोसहिपत्थस्स पुरस्स बाहेरपमदवणपेरन्तपाअवच्छाआए विस्समंतेहिं अम्हेहिं अण्णं वि अच्चंतपिअं आअण्णिअं । [*देव, लब्धकुमारानुज्ञाभ्यां कैलासात् प्रतिनिवृत्ताभ्यामौषधिप्रस्थस्य पुरस्य बाह्यप्रमदवनपर्यन्तपादपच्छायायां विश्राम्यद्भ्यामावाभ्यामन्यदप्यत्यन्तप्रियमाकर्णितम्*]

*महेन्द्रः* — ( *सौत्सुक्यम्* ) कीदृशं तत् ?

---

१ क ख त्वं । २. ख °वचसं । ३. ख °देशाचरणस्य । ४. क विजयमभि° । ५. ख 'देवो' इति नास्ति । ६. क °चारणमु° । ७ ख 'हि' इति नास्ति । ८. क ख °चरण° इति नास्ति ।

*द्वितीयः* — तत्थ जदिच्छाए संणिहिदाणं विस्संभादो अण्णुण्णमालवंतीणं तत्तहोदीए पव्वद[1]सव्वभोमघर[2]सामिणीए मेणाए परिआरिआणं पुढमाए भणिदं। जह, पिअसहि इमेसु दिअहेसु समुप्पण्णदोहिलाए अम्हाणं भट्टिदारिआए समुइदाइ एदाइं सहआरजंबीरखज्जूर-दाडिमाइं[3]ति पुच्छिदं अ अवरिज्जाए। हला, अवि सच्चं गुव्विणी संव्वुत्ता भट्टिदारिअ त्ति? उत्तरिदं अ[4] पुढमाए[5] एव्वं, सहि को एत्थ[6] संसओ, हिओ किल केलासादो विअ अणुप्पे[7]सिदस-माअदाए हरणचेडीए भट्टिणीस[8]आसे भट्टिदारिआदोहिलल-क्खणाइं अणुव्वण्णि[9]दाइं। जह,

आपंडुदुब्बलमुही ठुलठ्ठु[10]लग्गणीलसहणभरा।
किसदा विमुक्कमज्झा खिढिलिअसव्वंगभूसणा गोरी ॥४४॥

इति

*[तत्र यदृच्छया सन्निहितयोर्विस्रम्भादन्योन्यमालपन्त्योस्तत्रभवत्याः पर्वतसार्वभौमगृहस्वामिन्या मेनायाः परिचारिकयोः प्रथमया भणितम्। यथा, प्रियसखि, एषु दिवसेषु समुत्पन्नदौहृदाया अस्माकं भर्तृदारिकायाः समुचितान्येतानि सहकारजम्बीरखर्जूरदाडिमानीति पृष्टञ्च द्वितीयया। हला, अपि सत्यं गुर्विणी संवृत्ता भर्तृदारिकेति? उत्तरितञ्च (खलु) प्रथमया एवम्, सखि, कोऽत्र संशयः? ह्यः किल कैलासाद् विजयानुप्रेषितसमागतया हरणचेट्या देवीसकाशे भर्तृदारिकादौहृदलक्षणान्यनुवर्णितानि। यथा,*

---

१. क 'पव्वत' इति नास्ति। २. ख 'भोगघर°'। ३. क खज्जूराइं ति। ४. क 'अ' इति नास्ति, ख खु। ५. ख पढमाए। ६. ख अत्थ। ७. क ख आणुप्पे°। ८. ख देव्वीस°। ९. क ख अणुवण्णि°। १०. ख ठूलठ्ठूल°।

*आपाण्डुदुर्बलमुखी स्थूलस्थूलाग्रनीलस्तनभरा ।*
*कृशताविमुक्तमध्या शिथिलितसर्वाङ्गभूषणा गौरी ॥*

*इति* ]

**महेन्द्रः** — प्रियात् प्रियतरं नः । ( *इति दापितपारितोषिकौ*[1] *चरावनु*[2]*-जानाति, चरावुदीरितालोकशब्दं निष्क्रान्तौ ।* )

**महेन्द्रः** — भगवन्, अपि न विज्ञातो वसन्तेनायमुदन्तः ?

**वाचस्पतिः**— महेन्द्र, दुरुपलम्भः प्रायेण महेश्वराणामन्तःपुरवृत्तान्तः । प्रथमं मातृकुलप्ररूढतया परिचारिकामुखादयमवगतश्चराभ्याम्[3] । नेह[4] संशयितुं चावकाशः ।

*(प्रविश्य)*

**दौवारिकः**— देव, धनाधीशस[5]काशादुपस्थितः[6] प्रमोदवार्ताहरः पुरुषः[7] ।

**वाचस्पतिः**— महेन्द्र[8], जाने जगदम्बिका पुत्रं प्रासूतेति ।[9]

**महेन्द्रः** — *(ससम्भ्रमम्)*[10] भद्रं, किमिति[11] प्रतिहारे प्रतिषिद्धः ?

**दौवारिकः**— *(निष्क्रम्य पुरुषं प्रवेशयति)*

**पुरुषः** — ( *सप्रणामम्* ) देवदेवस्य त्र्यम्बकसखस्य प्रियसन्देशोऽयम् । *(इत्यर्द्धोक्ते*[12]*)*

---

१. °पकं मू० प्र० पा० । २. क चरा°, अपि मू० प्र० पा० । ३. ख °खाद-वगतोऽयं चराभ्याम् । ४. ख निह । ५. ख धनाधिनाथस° । ६. ख °दुपगतः । ७ ख 'पुरुष' इति नास्ति । ८. क 'महेन्द्र' इति नास्ति । ९. ख वाचस्पतेर्वाक्यमिदं नास्ति । १०. ख 'ससंभ्रमं' इति नास्ति । ११. क 'किमिति' इति नास्ति । १२. ख 'इत्यर्धोक्ते' इति नास्ति ।

महेन्द्रः — भद्र, निवेदय तावत् ।

पुरुषः — आविर्भूतो गिरिशगृहिणीगर्भतो निर्भरौजाः
षोढा वक्त्रेऽप्यथ च दशधा दोष्णि रूढो द्विधा च ।
एकेनाह्ना दध[1]दपि वयः षोडशाब्दं समिन्धे
दुर्वृत्तानां[2] समिति दलने शक्तिमान् कार्तिकेयः ॥४४॥

अपि च

पित्रोश्चुम्बति षण्मुखान्यपि मुखैः षड्भिर्मुदालिङ्गने
तेभ्योऽपि द्विगुणैर्भुजैर्व्यतिकरोत्येतावतः स्वान् भुजान् ।
एकाङ्काश्रि[3]कयोभयोः सुखयति प्रेमात्तदेहैक्ययो-
श्चेतः काचिदिहेदृशी विजयते बालस्य लीला विभोः ॥४५॥

अभिषिक्तश्च तत्रभवांस्तदात्व एव सुरसैनापत्ये विष्वक्सेना-
पत्येन । तदद्यप्रभृति सपत्नेभ्यो नास्माकमातङ्कशङ्काऽप्यस्तीति ।

महेन्द्रः — ( सानन्दम् ) भगवन्, प्रवर्त्यतां मङ्गल्या[4]तोद्यनिस्वनः । आरभ्य-
ताञ्च लास्यमप्सरोभिः ।

वाचस्पतिः— (तथैवादिशति)

(सर्वे सभासदो महेन्द्राय रत्नान्युपाहरन्ति)

महेन्द्रः — (वितीर्णविभूषणाम्बरं पुरुषं विसर्जयति)

( निष्क्रान्तः पुरुषः[5] )

---

१. क °नाहुद° । २. क मे दुर्वृत्तां । ३. °ङ्काशि° इति मू० प्र० पा० ।
४. ख मङ्गला° । ५. ख 'निष्क्रान्तः पुरुषः' इति नास्ति ।

(नेपथ्ये)

अब्रह्मण्यमब्रह्मण्यम् !

*महेन्द्रः* — भगवन्, ज्ञायतां किमेतदिति !

( *नेपथ्यार्धप्रविष्टः* )

*प्रतिहारी* — देव, देवसेनाधिनाथप्रादुर्भावमहोत्सवव्यासक्तेषु तावदत्र सर्वेषु[1] तत्रभवतो रागस्य कन्या रतिरधिसौधं पर्यङ्कप्रसुप्तैव[2] केनापि मायाविनाऽपहृता[3] न दृश्यत इति पर्याकुलस्य तद्गृहजनस्य समाक्रोशतो महानयं कोलाहलः।

*महेन्द्रः* — ( *ससंरम्भम्* ) भगवन्, कथमिदमापतितमयशस्करमस्माकम्; को वाऽध्यमरा[4]वति साहसिक्यं तदिदमा[5]चचार। दित्सिता हि[6] कल्याणी रतिः पितृभ्यां वत्साय[7]। कृतसुरकार्ये च प्रत्यागते वत्से[8] किं प्रतिपत्तव्यमस्माभिः। कथं वा ज्ञायेत[9] कन्यापाटच्चरः सोऽपशदः[10] ?

*वाचस्पतिः* — महेन्द्र, तर्कयामि रतिहेतोः कुमारं प्रति स्पर्धावतो लब्धान्तरस्याधुनाऽसु[11]रस्य शम्बरस्य कर्मणाऽनेन भवितव्यमिति।

*महेन्द्रः* — (*सक्रोधम्*) आः, कृतं मे मूर्ध्नि[12] पदमसुराधमेन ! (*इत्युत्थायोद्धतं*[13] *परिक्रामन्, प्रतिहारिणं प्रति*) भद्र, समाज्ञापयाधि-

---

१. ख पौरेषु। २. क °ङ्कसुप्तैव। ३. ख 'केनापि मायाविनापहृता' इति नास्ति। ४. ख मध्येमरा°। ५. ख तदीदृशमा°। ६. क च। ७. ख कुमारमन्मथाय। ८. क 'वत्से' इति नास्ति, ख कुमारे। ९. ख ज्ञायते। १०. ख °च्चरोपशदः। ११. ख °ना मायाविनोऽसु°। १२. ख मूर्धनि। १३. ख °य समुद्धतं।

कृतान् सेनासन्नाहाय । भगवन्, समाश्वास्यतामाप्तपुरुषमुखेन[1] सखा मे रागः । एष तावदि[2]दानीम्,

क्षोणीभृत्कुलपक्षपातिलवनाकुण्ठाश्रिणा विस्तवद्-
वृत्रासृग्भरलब्धपारणसमारम्भेण दम्भोलिना ।
निर्मथ्याहमनेन दैत्यहतकं तं शम्बरं संयुगे
प्रत्याहृत्य रतिं वयस्यहृदयाह्लादाय[3] जायेऽञ्जसा ॥४६॥ इति

*वाचस्पतिः*— महेन्द्र, कियदेतद् भवतोऽपि प्रतिज्ञात[4]पूर्वो हि वधः शम्बरस्य कुमारेण स्वयमेव[5] । अतः स एवास्य यशसो भाजनं भवतु ।

*महेन्द्रः* — भगवन्, एवमप्यस्माभिः परिपन्थिनः पार्ष्णिग्राहिभिर्भ[6]वितव्यम् ।

*(इति निष्क्रान्ताः सर्वे)*

इति जगन्नाथपण्डितकृतौ रतिमन्मथनाम्नि नाटके[7] तृतीयोऽङ्कः समाप्तः[8] ॥



---

१. क 'ममात्यपुरुषमुखेन, ख 'आप्तपुरुषमुखेन' इति नास्ति । २. ख एषोऽहमि° । ३. ख °यानन्दाय । ४. ख प्रतिश्रुत° । ५. ख °स्य स्वयमेव कुमारेण । ६. °हिभिश्च भ° । ७. क °थनाटके । ८. 'समाप्तः' इति मू० पु० नास्ति ।

मूलपुस्तके 'श्रीरस्तु । श्रीदेव्यर्पणमस्तु' इति लिखति ।

## चतुर्थोऽङ्कः

[1](ततः प्रविशति रागो मुदिता सख्यौ पुरोहितश्च)

॥ अङ्कास्यम् ॥

*रागः* — (*सवैक्लव्यम्*) हा वत्से,[2]

समुत्पन्ना मान्ये सकलभुवनानामभिजने
सुते लक्ष्मीजानेरुचितमनुरक्ताऽसि सदृशे ।
गुणैः स्त्रैणं सर्वं ननु च हृतगर्वं कृतवती
कथं वत्से याताऽस्यसदृशमिमां हा परिणतिम् ॥१॥

हन्त !

हविर्निर्वापार्हां स्रुचमधिमखं श्वेव हतकः
स्रजं हृद्यां जात्यैर्मणिभिरतिलोलः[3] कपिरिव ।
नृशंसः सारङ्गीं वृक इव भयोल्लोलनयनां
जहार त्वां वत्से स कथमसुराणामपशदः ॥२॥

*मुदिता* — (*साश्रुपातम्*) हा जादे, कहिं तुह वअणदोसारअणं पेक्खिस्सं ।
[*हा जाते क्व तव वदनचन्द्रं द्रक्ष्यामि ?*]

(*सानुस्मरणम्*)

---

१. इतः पूर्वं 'श्रीदेव्यै नमः' इति मू० प्र० लिखति । २. ख 'हा वत्से' इति नास्ति । ३. क 'लोलैः ।

किं दोहिलस्स अह वा पसवव्वहाए
आहो विवड्ढणकिदस्स पलिस्समस्स ।
णाणाविहस्स जह वा[1] तुह कीलिअस्स
हा कस्स कस्स सुमिरामि[2] किसोरिए मे ॥३॥

[ किं दौहृदस्य अथवा प्रसवव्यथाया
आहो विवर्धनकृतस्य परिश्रमस्य ।
नानाविधस्य यथा वा तव क्रीडितस्य
हा कस्य कस्य स्मरामि किशोरिके मे ॥ ]

सख्यौ — ( साक्रोशम् )

अहिरूढकुंजराणं दठ्ठूण वहूवराण सोहग्गं[3] ।
उक्कंठिआ सहीणो पलि[4]हासे लज्जिआ[5] कहिं दाणिं ॥४॥

[अधिरुढकुंजरयोर्दृष्ट्वा वधूवरयोः सौभाग्यम् ।
उत्कण्ठिता सखी नौ परिहासे लज्जिता क्वेदानीम् ॥]

(इति पुरोहितवर्जं[6] सर्वे मोहमुपगम्य पुनः संज्ञां लभन्ते)

रागः — (अनुस्मृत्य)

विहारे बालाभिः सह विततगेहोपकरणं
जगत्यां[7] दाम्पत्यो[8]चितमभिदधाना बहुविधम् ।
अकस्मात् प्राप्ते मय्यखिलमपि हित्वाऽनुजननि
ह्रिया लीना वत्सा मम कथमपैतु स्मृतिपथात् ॥५॥

---

१. ख अच्चब्भुदस्स जइ वा । २. क सुमरामि । ३. ख णेवच्छं ।
४. ख परि° । ५. ख लज्जिदा । ६. क ख 'पुरोहितवर्जं' इति नास्ति ।
७. क जगत्या, ख समन्तात् । ८. क दीपत्यो ।

**सुदिता** — जादे सकोदुआए मए खु दावूण पुरिसणेवच्छं ।
एसा सुअवाणी दे भणिदे जाए त्ति संभमो आसी ॥६॥

[जाते सकौतुकया मया दत्वा पुरुषनेपथ्यम् ।
एषा शुकवाणी ते भणिते जायेति सम्भ्रम आसीत् ॥

**सख्यौ** — पुढमं पासाअ[1]गआ पुरच्छाए विणिग्गअं मअणं ।
पेक्खिअ परूढलज्जा आसी हा लज्जिदुं वि सही ॥७॥

[प्रथमं प्रासादगता पुरस्थयया विनिर्गतं मदनम् ।
प्रेक्ष्य प्ररूढलज्जाऽऽसीद् हा लज्जितुमपि सखी ॥

(इति पुनः सर्वे[2] मोहमुपगच्छन्ति)

**पुरोहितः** — महाभागाः[3], कृतं विलापेन[4] । आपतिते दुर्जाते धैर्यमवलम्ब्यताम् ।

(सर्वे समाश्वसन्ति)

**रागः** — (सचिन्तम्) हन्त, तमसुराधममनुद्रुतस्य सख्युः सुत्राम्णोऽपि प्रवृत्तिर्नाकर्ण्यते ।

(प्रविश्य, आकाशयानेन)

**चारणः** — (मध्येसरणि सौधाग्राङ्गणगतं रागमवलोक्य, स्वगतम्[5]) अनुलङ्घ्यो[6]ऽयमत्रभवान् । (इत्युपसृत्य) आर्य, प्रणमामि ।

**रागः** — भद्र, शङ्के, सत्वरेण त्वया कुमारजयन्ताय महेन्द्रवार्ताप्रापकेण भवितव्यम् ।

---

१. ख पासाद° । २. क सर्वे पुनः । ३. ख °भाग । ४. ख मोहेन ।
५. क 'स्व०' इति नास्ति । ६. क अलङ्घ्यो° ।

*चारणः* — आर्य, अथ किम् ?

*रागः* — भद्र, अप्यस्ति प्रमोदवृत्तान्तः !

*चारणः* — आर्य[1], अस्माकमविदिता[2]पहृतां कल्याणीं रतिं स्वरथमारोप्य सत्वर[3]मपक्रामन्तमसुरपाशं[4] सन्नद्धया सह सुपर्वपृतनयाऽनुद्रवति द्रुतमन्तकवरुणवित्तेशवसुरुद्रादित्यमरुत्परिवृते देवे मरुत्वति शम्बरसम्बन्धिनः शूरपद्मसिंहास्यतारकप्रभृतयो दनुजपतयो महता बलेन मध्येमार्गमवाग्रहीषत ।

*(सर्वे विषादं नाटयन्ति)*

*रागः* — ततः !

*चारणः* — ततश्च यावच्चिरप्ररूढवैरायितसमिध्यमानक्रोधानले सुरासुरध्वजिन्यावन्योन्यं समापततः ।

**अत्रान्तरे च भगवानधिरूढबर्हो**
**षड्भिर्भुजैर्द्विगुणितैर्विधृतोग्रहेतिः ।**
**सेनाधिभूः[5] सरभसं सहपारिषद्यः**
**शत्रुं द्विषद्भिरव[6]रुद्धमभिप्रपेदे ॥८॥**

*रागः* — (साश्वासम्) समये प्राप्तो हि शक्तिपाणिः[7] । ततस्ततः ?

*चारणः* — अथ पुनरहम्प्रथमिकाभिपतदमरासुरवीरचक्षुःप्रसरनिरोधित्वङ्ग[8]दुत्तुङ्गतुरङ्गखुरपुटाभिहत[9]धरातटसमुद्धूत[10]धूलीपटलप्रशमनप-

---

१. क 'आर्य' इति नास्ति । २. क °कर्मपविदिता° । ३. ख सरभस° । ४. क °सुरापशद । ५. क °धिपः । ६. क ख रभि° । ७. ख समये खलु प्राप्तः शक्तिमान् । ८. क 'त्वङ्गदुत्तुङ्ग' इति नास्ति । ९. ख °पुटाहत° । १०. क तुरङ्गखुरपुटोद्धूत° ।

टु[१]कुम्भिकुम्भविगलन्मदाम्बुजम्बालितसङ्गराङ्गणनिमग्नरथाङ्ग-तानिष्पन्दस्यन्दने परस्पराभिघातखणखणायमानप्रहरणोड्डामर-प्रहारे[२] प्रवृत्ते सम्प्रहारे,

**शक्त्या विशाखस्य विभिन्नवक्षाः स शूरपद्मोऽन्तकसद्म भेजे ।**
**अवाङ्मुखः सिंहमुखः पपात पर्यस्ततारोऽजनि तारकश्च ॥९॥**

*(सर्वे हर्षं नाटयन्ति)*

***रागः*** — समुन्मूलितं हि लोकत्रयीशल्यं[३] महासेनेन ।

***चारणः*** — अनुजानातु मामार्यः कुमारजयन्तस्यान्तिक[४]गमनाय ।

***रागः*** — भद्र, अथ कन्याचोरस्य को त्तान्तः ?

***चारणः*** — आर्य, एवमे[५]तस्मिन् वर्तमाने समरसमारम्भे बाणपातान्तरमात्र एव दृश्य[६]मानः प्रजवेन रथेन दूरमतिपतन्न दृश्यते स क्व गतो वा[७] ? *(इति कथयन्नेव निष्क्रान्तः)*

*(सर्वे पुनर्मोहेन भूम्यां निष्पतन्ति)*

***पुरोहितः*** — *(सखेदसम्भ्रमं भृङ्गारोदकेन सर्वान् सिक्त्वा)* महाभागाः, अल-मतिमात्रेण व्यामोहेन । समाश्वसित समाश्वसित ।

*(सर्वे समाश्वसन्ति)*

---

१. क °प्रति° । २. ख °मानप्रहरणप्रहारोड्डामरे । ३. क °त्रयीहृदयशल्यं ।
४. क °जयन्तान्तिक° ख °न्तसमीप° । ५. क 'एवम्' इति नास्ति ।
६. °न्तर एव, ख एव परिदृश्य° । ७. 'वा' इति मू० प्र० नास्ति ।

*रागः* — हा वत्से, शकुन्तिकेव सौनिकस्य शरारोरसुरस्य हस्तगता कथं प्राणिषि ?

*मुदिता* — जादे, एरिसं दुज्जादं अणुहोदुं चेअ दुब्भगाए[1] गब्भे समुप्पण्णासि ? [*जाते, ईदृशं दुर्जातमनुभवितुमेव मम दुर्भगाया गर्भे समुत्पन्नाऽसि ?*]

*सख्यौ* — पिअसहि, एव्वं होदव्वे कुदो तुए अम्हाणं सोहिदं सवुत्तं ? [*प्रियसखि, एवं भवितव्ये कुतस्त्वयाऽऽवयोः सौहृदं संवृत्तम् ?*]

*पुरोहितः* — महाभागाः, प्रति[2]हते बलवति प्रतिबन्धे तत्रभवता शक्तिधरेण क्व गतो मोक्ष्यते स तावदसुरापशदो वज्रधरस्य। न हि जातु परदेवताप्रसादोऽन्यथाभावी ।

(प्रविश्य)

*मयूरिका* — ( *सहर्षसम्भ्रमम्* ) ताद अज्जू[3], पिअं वो णिवेदेमि। [*तात अम्ब, प्रियं वो निवेदयामि*]

*रागः* — (*सौत्सुक्यम्*) कथय भद्रे, किं प्रत्याहृता वत्सा महेन्द्रेण ?

*मयूरिका* — ताद, भअवदीए[4]त्ति भणिदव्वं। [*तात, भगवत्येति भणितव्यम्*]

*रागः* — कथमिवैतत् ?

---

१. क वेअ मह दुब्भ°, ख एव्व मह दुब्भ°। २. ख °भाग, तत्रभवता शक्तिधरेण प्रति°। ३. क अज्जुए, ख भज्जु। ४. ख °वईए।

**मयूरिका** — ताद, जाव भट्टिदारिअं ओहरिदं णिवेइदुं तादेण आणत्ता[1] भअवदीए[2] सविहं गअम्हि दाव तहिं दिट्ठा मए भट्टिदारिआ। *[तात, यावद् भर्तृदारिकामपहृतां निवेदयितुं तातेनाज्ञप्ता भगवत्याः सविधं गताऽस्मि तावत् तत्र दृष्टा मया भर्तृदारिका]*

**मुदिता सख्यौ च** — एवं वि णाम सुप्पहादं होएज्जइ[3]। *[एवमपि नाम सुप्रभातं भवेत्]*

**रागः** — हंजे[4], नूनं भ्रान्तिरीदृशी भवत्याः।

**मयूरिका** — किं अज्जाणं मिच्छावअणम्हि[5]। भअवदीए[6] णिअजोअमाहप्पेण णिम्मिअं मायावइं णाम भट्टिदारिआरूवसरिसं[7] इत्थिअं संबरस्स रहे तस्स सवि अवि[8]ण्णादं विणि[9]वेशिअ भट्टि[10]-दारिआ मोइदेत्ति तत्तहोदीए वसिणीए क्खु णिवेइदं *[किमार्याणां मिथ्यावचनाऽस्मि ? भगवत्या निजयोगमाहात्म्येन निर्मितां मायावतीं नाम भर्तृदारिकारूपसदृशीं स्त्रियं शम्बरस्य रथे केनाप्यविज्ञातं विनिवेश्य भर्तृदारिका मोचितेति तत्रभवत्या वशिन्या खलु निवेदितम्]*

*(सर्वे सम्मोदपरवशा वितिष्ठन्ते[11])*

**रागः[12]** — *(पुरोहितं प्रति)* भगवन्, किमेतन्न[13]प्रत्येमि ?

---

१. ख अणुप्पेसिदा। २. ख °वईए। ३. क होवइ ख होज्जाइ। ४. 'हंजे' इति मूलपाठे नास्ति। ५. ख °वअणम्मि। ६. ख °वईए। ७. ख °सरिसि। ८. ख °रहे केण वि°। ९. ख °दं णिं°। १०. क 'रूवसरिसं' इत्यारभ्य 'विणिवेसिअ' पर्यन्तं नास्ति, ख °मृशिअ मोइदा भट्टि°। ११. क °वशा उत्तिष्ठन्ते, ख °वशीभवन्ति। १२. 'रागः' इति मू० प्र० नास्ति। १३. ख किमिदं न।

पुरोहितः — महाभाग, क इइ विस्मयः ? महाप्रभावा हि भगवती। अथ च,

निर्मातुं सिन्धुमन्धुं तमपि तमचलं लोष्टमेतत्तथैव
द्यां क्ष्मां तां तां सुदूरं सविधगतमदस्ताद्दगित्थञ्च नेत्थम्।
एकं नानेदमेवं पुनरभिलषितं वस्तु हस्ते विधातुं
दुष्प्रापं वा क्षमायाः किमिव हि भुवने योगसिद्धेरसाध्यम्॥१०॥

मुदिता — ( सोल्लासम्[1] ) पअडिदं खु अवच्चवच्छल्लं पिअसहीए सव्वत्थसाहिआए। [*प्रकटितं खल्वपत्यवात्सल्यं प्रियसख्या सर्वार्थसाधिकया*]

मयूरिका — ताद, ममाहि आअण्णिदज्जूतादपरिकिलेसवुत्तंताए सत्तरं भट्टिदारिअं घेत्तूण एत्थ[2] आअच्छंतीए भअवदीये[3] पुरदो पहिदा अहं केलासादो वुढमाअदस्स तत्तहोदो वसंतस्स धरदुवारदेसदिट्ठादो कुमालवम्महसविहं पडिगच्छंतादो पणिहिणो कोइलआदो आअण्णिदवदी। जह, महाभाओ कुमाल[4]वम्महो वि[5] दिण्णाणुण्णो भअवंतेहिं पव्वदी[6]परमेसरेहिं आअच्छइत्ति। [*तात, मत्सकाशादाकर्णिताम्बातातपरिक्लेशवृत्तान्तया सत्वरं भर्तृदारिकां गृहीत्वाऽत्र समागच्छन्त्या भगवत्याः पुरतः प्रहिताऽहं कैलासात् प्रथमागतस्य तत्रभवतो वसन्तस्य द्वारदेशदृष्टात् कुमारमन्मथसविधं प्रतिगच्छतः प्रणिधेः कोकिलकादाकर्णितवती। यथा, महाभागः कुमारमन्मथोऽपि दत्तानुज्ञो भगवद्भ्यां पार्वतीपरमेश्वराभ्यामागच्छतीति*]

---

१. 'सोल्लासम्' क तथा मू० प्र० नास्ति। २. क अत्थ। ३. क ख भअवईए।
४. ख 'कुमार' इति नास्ति। ५. क 'वि' इति नास्ति। ६. ख पव्वई°।

*रागः* — इदमपि प्रियं नः। हंजे, किं न कथितं त्वया कोकिलकाय वत्सायाः प्रत्याहरणवृत्तम् ?

*मयूरिका*[1] — ताद, आदिट्ठम्हि खु तत्तहोदीए वसिणीए, जह णप्पआसणिज्जो अण्णस्स कस्स वि एसो अत्थो। [*तात, आदिष्टाऽस्मि खलु तत्रभवत्या वशिन्या यथा न प्रकाशनीयोऽन्यस्य कस्याप्येषोऽर्थः*]

*रागः* — ( *ससम्भ्रमम्* ) तदेत प्रत्युद्यामो भगवतीम्।

(*इति सहेतरैर्निष्क्रान्तः*)

(*ततः प्रविशति रथेन सारथिद्वितीयो मन्मथः*)

*मन्मथः* — (*रतिमनुस्मृत्य सपरितापमात्मगतम्*)

**कार्यान्तरव्यग्रतया कियन्तं कालं ममासीत्[2] पुटपाककल्पः।**
**कान्तावियोगस्तनुतेऽधुना तु कामप्यसौ दुर्विषहामवस्थाम्॥११॥**

तर्कयामि तावदहमिव प्रियतमाऽपि भूयसा वियोगदवदव[3]थुना दूयत इति। पुरा खलु तातानुज्ञया सुरकार्याय सत्वरममरावत्या निष्क्रामति मयि,[4]

---

१. ख अत्र मयूरिकावचनमेवमस्ति—ताद, हरिसपरवसाए व विसुमरिदं खु मए एदं [तात, हर्षपरवशया विस्मृतं खलु मयैतत्] (प्रविश्य) शारिका—ताद, एसा खु भअवदी अम्हाणं अलिंदं अलंकरेइ [तातैषा खलु भगवत्यस्माकमलिन्दमलङ्करोति]। २. क ममासीत् कालं कियन्तं। ३. क °तमाऽप्यधुना भूयसा विरहदवथुना। ४. क 'पुरा' इत्यतः 'मयि' पर्यन्तं नास्ति, ख °मति तत्रभवतो रागस्य द्वारदेशगते मयि।

विस्रस्ताखिलगात्रमाकुलवलन्नेत्रं प्रभूतोदयद्-
भूयः संयत[1]वाष्पनिर्भरगलन्निश्वासदूनाधरम् ।
उद्ग्रीवं प्रपदस्थया[2] सहचरीदत्तावलम्बं तया[3]
सौधाग्रेऽस्मदनुप्रयातमनसा तन्वैव तस्थे[4] चिरम् ॥१२॥

( *सानुस्मरणम्* ) हन्त[5], इदमेव समुत्कीर्णमिव मे मनसो न व्यपैति । यत्किल जनन्या गौरवा[6]न्नन्दनवनात्प्रतिनिवर्तमाना,

गत्वा कियन्त्यपि पदानि विवृत्तकण्ठ-
मास्राविलेक्षणमवेक्ष्य सरोरुहाक्षी ।
साकूतमाह सहकारतरो कदा नु
नेत्रोत्सवाय भवितासि पुनर्ममेति ॥१३॥

सा तावदिदानीम्,

धत्ते किन्नु धृतिं किमाचरति वा तन्वी कथं वर्तते
यद् वा जीवति वा न वा चिरतरं मद्विप्रयोगाकुला ।
स्मृत्वा हन्त मम प्रयाणसमये तस्या दशां तादृशीं
यत्सत्यं व्यथितं मनः प्रतिकलं किं किं न वा शङ्कते ॥१४॥

( *अशकुनं सूचयित्वा सखेदम्* )

स्फुरति नयनं वामं कामं भुजश्च मुहुर्मुहु-
र्वपुरधिगतस्वेदं चेदं स्वरोऽप्यवसीदति ।
अहह बलवत्कम्पं सम्प्रत्यनिष्टविशङ्कि मे
हृदयमधुना स्मारं स्मारं प्रियां परितप्यते ॥१५॥

---

१. क °संभृत° । २. क प्रपदस्य या । ३. क मया । ४. ख °न सा सा (?) तन्वावतस्थे । ५. क 'हन्त' इति नास्ति । ६. ख जननीगौरवा° ।

*( पुरो[1]ऽवलोक्य )* सचकितमापतन्नयं प्रणिधिः कोकिलक इव[2] लक्ष्यते ।

*( प्रविश्य )*

*कोकिलकः*—जेदु जेदु देव्वो[3] ।

*मन्मथः* — कोकिलक, अचिरप्रत्यागतमस्वस्थहृदयञ्च त्वां लक्षये । किं निवेदितास्मदागमनो मन्त्री वसन्तः ? तद्द्वारा च तातो ज्यायान्[4] ।

*कोकिलकः*—*( सभयम् )* देव्व, असंणिहिदो खु अमरावदीए अमच्चो । [*देव, असन्निहितः खल्वमरावत्याममात्यः*]

*मन्मथः* — *( सविचिकित्सम्[5] )* किं कारणमसन्निधाने तस्य ?

*कोकिलकः*—*( सगद्गदम् )* देव्व, संबरासुरं अणुद्दवंतेण देव्वेण जंभरिउणा समं ससेण्णो सो गओ । [ *देव, शम्बरासुरमनुद्रवता देवेन जम्भरिपुणा समं ससैन्यः स गतः* ]

*मन्मथः* — *( सरोषम् )* रे विस्पष्टं कथय ।

*कोकिलकः*—*( सोत्कम्पम्, अभयं याचते )*

*मन्मथः* — दत्ताभयोऽसि, यथावृत्तमावेदय ।

---

१. क पुरतो । २. क कोकिल इव । ३. क जयदु जयदु देवो । ४. क 'किं नि°' इत्यत आरम्भ 'ज्यायान्' पर्यन्तं नास्ति । ५. क 'सविचिकित्सम्' इति नास्ति ।

*कोकिलकः*—देव्व, ओहरीआ खु तत्तहोई[1] रई पुरिल्लदेव्वावसदेण । [ *देव, अपहृता खलु तत्रभवती रतिः तेन पूर्व देवापसदेन* ]

*मन्मथः* — ( *सास्रम्* ) हा प्रिये, कथं भवितासि (*इति रथोपस्थे मूर्च्छति*)

*सारथिः* — आयुष्मान्, समाश्वसिहि, समाश्वसिहि ।

*मन्मथः* — ( *समाश्वस्य सकरुणास्त्रम्*[2] )

**सर्वस्वं मे हृदयहृदयं चक्षुषः किञ्च चक्षुः**
**प्राणप्राणः सुखमुखनिधिः प्रेम च प्रेम भूम्नः ।**
**व्याघ्रस्येव प्रकृतिकृपणा नैच(चि)की देवशत्रो-**
**र्हस्ते लग्ना कथमिव वत प्राणिति प्रेयसी सा ॥१६॥**

*सारथिः* — आयुष्मन्, नैष विषादसमयस्तावदायतिक्षममनुचिन्त्यताम् ।

*मन्मथः* — सूत, किमाचरामि । सम्प्रति हि,

**विवेकं न्यक्कुर्वन् सहजमपि धैर्यं शिथिलयन्**
**खिली[3]कुर्वन् व्रीडां विनयमतिमात्रं व्यपनयन् ।**
**विमोहं व्यातन्वन्नहह परितापं बहलय-**
**न्नियत्तातिक्रान्तः प्रभवति विकारः किमपि मे ॥१७॥**

*सारथिः* — आयुष्मन्, एवमेवैतत्[4] । अथापि परिपन्थिनो विनिग्रहे सोत्साहतैवायुष्मतोऽधुना सुश्लाघा ।

*मन्मथः* — ( *सधैर्यम्* ) साधु रथकुटुम्बिन्, साधु ।

---

१. क °होदी । २. ख °रुणं । ३. क खली° । ४. क एवमेतत् ।

**प्रियमाश्वासनार्हाश्च बहवः सन्ति शंसितुम् ।**
**हितस्य च यशस्यस्य वक्तारो विरलाः पुनः ॥१८॥**

कोकिलक, विज्ञाप्यतां तातः। शापिताः स्थ मया। सर्वैर्भवद्भिरलङ्क्रियताममरावती[1]। अहमेव तस्यासुर[2]तस्करस्य दर्पं व्यपनेष्यामीति।

कोकिलकः—जं आदिसइ देव्वो। [ *यदादिशति देवः* ]

( *इति निष्क्रान्तः* )

*मन्मथः* — सूत, वैजयन्तपुरगामिनाऽध्वना नोदय स्यन्दनाश्वान्।

*सारथिः* — ( *तथा कुर्वन् सर्वतोऽवलोक्य* ) आयुष्मन्, पश्य पश्य समुत्थितानुत्पातानेता [3]।

**दिशः कलुषिता भृशं न च विभाति भासां निधि-**
**र्युगान्त इव वान्ति सन्ततममी हि झंझानिलाः।**

*मन्मथः* — ( *सोल्लासम्* )

**इयं ध्वनति शिञ्जिनी मम धनोरनास्फालिता**
**विनिःसरति सत्वरं शरततिश्च तूणीमुखात् ॥१९॥**

*सारथिः* — ( *मन्मथस्य हर्षमभिवर्धयन्* ) आयुष्मन्,

**यथैतैरुत्पातैरजनि परितो दारुणतरै-**
**र्यथा चाविर्भूतं हृदयसुखदैस्तैः[4] सुशकुनैः।**

---

१. क मया सर्वे। अलङ्क्रियतां भवद्भिरमरावती। २. क अहमेवास्यासुर°, ख °स्य सुर°। ३. क °नुत्पातान्। ४. 'स्ते' मू० प्र० पा०।

तथा शङ्के भावी सपदि समरः कोऽपि च महान्
जयः किञ्चास्माकं सकलजगदानन्दजननः ॥२०॥

*( दक्षिणस्यां दिशि चक्षुर्व्यापारयन् )*

मन्थाद्रिक्षोभ्यमाणोऽर्णव इव निनदन् दुन्दुभिः श्रूयते यत्
कल्पाभ्रोन्मेषकल्पो[1] दिवि यदयमितो रेणुरुच्चैर्जिहीते ।
कम्पन्ते यच्च शम्पा इव दिशि दिशि सस्वर्णरेखाः पताकाः
शङ्के नेदीयसी तत् प्रतिभटपृतना वर्तते वर्त्मनीति[2] ॥२१॥

*मन्मथः* — *( सावष्टम्भम्[3] )* दिष्टया सन्निहित एव मे धनुर्व्यापारस्यावसरः[4] ।

*सारथिः* — *( सचिन्तम् )* आयुष्मन्, शरासनमात्रमित्रस्य तव महत्या सेनया[5] परिवृतमसुरं प्रत्यभियोगः शङ्कामङ्कुरयति मे ।

*मन्मथः* — *( सहेलम् )* सूत, किमदृ[6]ष्टास्मद्भुजशौण्डीर्य इव विचिकित्ससि ?

तां लङ्कां विशतः पुरा हनुमतः को वा द्वितीयोऽभवत्
तार्क्ष्यस्यापि सुधाहृतौ सुरचमूमाधावतोऽनुद्रुताम् ।
पार्थस्याथ च गोग्रहे दलयतः स्वैरं कुरून् सङ्गता-
मेवं सम्प्रति निघ्नतो रिपुबलं का मे सहायस्पृहा[7] ॥२२॥

*सारथिः* — *( अग्रतो निरूप्य )* आयुष्मन्, जाने भवद्रथालङ्कारस्य ध्वजमकरस्य[8] दर्शनेन परिज्ञातभवदभियोगश्चमूमन्तराले वि[9]धाय रिपुरेक एव रथेन दूरमतिपततीति ।

---

१. क °कल्पं । २. क °नीतिः । ३. क 'सावष्टम्भम्' इति नास्ति । ४. क °रावसरः । ५. ख पृतनया । ६. ख किमेतदद्° । ७. क सहायः स्पृहा । ८. क मकरध्वजस्य । ९. ख °मन्तरा वि° ।

मन्मथः — ( सरभसम् ) सूत, यद्येवं वामेन परिहरन् परबलमसुराधमरथाभिमुखमवस्थापय रथं मे ।

सारथिः — ( कशाहतित्वरितपातिभिस्तुरगैर्यथानियोगमाचरति )

( ततः प्रविशति रथस्थः शम्बरः )

शम्बरः — ( मन्मथमवलोक्य सावज्ञम्[1] ) एष किल[2] पञ्चेपुर्ममापि हस्तगतां योषितं प्रतिनिनीषुः कुलिङ्गविहङ्गभङ्गीमनुसरति ।

मन्मथः — (शम्बररथस्थितां[3] मायावतीमवेक्ष्य[4] सविषादम्, स्वगतम्[5] )

मरुप्रान्ते हन्त स्थलकमलिनीवोद्गतवती
तरक्षोः पार्श्वस्था चकितचकिताक्षीव[6] हरिणी ।
तमोलीढा चान्द्री तनुरिव कलाशेषविभवा
न राजत्येषा मे दितिजपरिभूता प्रियतमा ।।२३।।

अपि च,

पश्यन्ती न हि पश्यतीन्दुवदना यन्मां रथस्थं पुरः
सोल्लासं न च मे शृणोति धनुषो यज्ज्या[7]रवाडम्बरम् ।
यत्त्रासेन च धावतो रिपुभटान् विज्ञाय नो मोदते
जाने प्रोषितचेतनेव तदसावन्यादृशी वर्तते ।।२४।।

( सनीडगतं[8] शम्बरं प्रति सरोषम्, प्रकाशम् ) रे रे कन्यामलिम्लुच,

---

१. क ख 'सावज्ञं' इति मू० प्र० पा० । २. क खलु । ३. क °थस्थां । ४. ख °मवलोक्य । ५. क आत्मगतम् । ६. ख तरलतरलाक्षीव । ७. ख यज्जा° । ८. ख 'सनीडगतम्' इति नास्ति ।

समादत्से दंष्ट्रामिह विषधरस्यापि सरुषः
सटां दर्पादुत्पाटयसि सहसा कुञ्जररिपोः ।
असेर्धारां घोरामपि रसनया लेक्षि नितरा[1]-
मिमां यच्चन्वङ्गीमपहरसि नाशाय कुमते ॥२५॥

*शम्बरः* — ( *सोत्प्राशम्* ) रे कुसुमेषो, सर्वस्य साधारण्याः कन्यायाः कृते मामपि शम्बरं प्रत्युद्यतो विस्पष्टं हि ते सुमतित्वम् । स्त्रीपुंसरहःसङ्गराङ्गणोप[2]युक्तशौर्यस्य तवापसरणमेव शरणमतः[3] समरमुखात् । यदि वा युद्धश्रद्धा[4], तदेहि समीकक्षमां क्षमामासादयावः ।

*मन्मथः* — ( *सरोषस्मितम्* ) दुर्मुख, कृतं विकत्थनेन । वाग्विदग्धं[5] त्वां शरैरेव प्रत्युत्तरयामि, पूरयामि[6] च कलहप्रियस्य मुनेराहवदर्शनकूतूहलम् ।

(*इति निष्क्रान्तौ मन्मथः शम्बरश्च*)

(*ततः प्रविशत्याकाशयानेन नारदः शिष्यश्च*)

*नारदः* — (*सानन्दताण्डवम्, महतीमास्फालयन्*)

इमे जगति पर्यटन्नविरतं द्वयेनामुना
सुरासुरधनुर्भृतां समरसाहसैरद्भुतैः ।
रमेशपरमेशयोरथ च पावनैः कीर्तना-
दपास्तभवबन्धनैः कुशलधामभिर्नामभिः ॥२६॥

*शिष्यः* — ( *सविस्मयम्* ) भअवं, भअवंतेण काइं काइं समरब्भुदाइं

---

१. ख सुतरा° । २. ख °सङ्गरोपयुक्त° । ३. क °पसर्पणमेवमतः । ४. ख °श्रद्धालुता । ५. क वाग्वीर्यदग्धं । ६. क 'पूरयामि' इति नास्ति ।

दंसणपहं णीदाइं ? [*भगवन्, भगवता कानि कानि समराद्भुतानि दर्शनपथं नीतानि ?*]

*नारदः* — ( *साशिरःकम्पम्* ) साधु पृष्टं वत्सेन ।

दृष्टो दैत्यपतिं नखैर्दलयतो मायाहरेर्विक्रमः
सन्नाहोऽथ पुरत्रयं प्रदहतस्तत्तादृशो धूर्जटेः ।
संरम्भोऽपि महान् बलस्य निधने जातक्रुधो वज्रिण-
स्तारायाश्च कृते तथाप्रतिभयो देवासुराणां रणः ॥२७॥

अन्येषामप्यसंख्यातानि लोकप्रवीराणां रणापदानानि ।

*शिष्यः* — अह भअवं, अलद्धाहवदंसणसुहेसु सूरद्धएसु कहं अत्तहोदा अप्पा विणोदीअदि ? [*अथ भगवन्, अलब्धाहवदर्शनसुखेषु दिवसेषु कथमत्रभवताऽऽत्मा विनोद्यते ?*]

*नारदः* — वत्स, सुमतिर्भवान् ।

दम्पत्योरनुरक्तयोरपि मिषात् सम्पादितं वाक्कलिं
प्रक्रान्तं सहसा नियुद्धमथवा भक्ष्योत्सुकैर्बालकैः ।
उक्ष्णो वा[1]ऽथ चतुष्पथेऽभिपततो योद्धुं मदेनोद्धुरान्[2]
पश्यन् निर्वृतमानसोऽनवरतं हिण्डे महीमण्डले ॥२८॥

*शिष्यः* — ( *विहस्य, स्वगतम्* ) दुप्परि[3]हरा खु सव्वस्स वि अप्पणो पकिदी । [*दुष्परिहरा खलु सर्वस्यात्मनः प्रकृतिः*]

*नारदः* — इदानीं पुनर्भुवनैकशूरान् शूरपद्मादीन् शरव्ययता शरजन्मना

---

१. क उक्ष्णोर्वा । २. क °द्धुरं । ३. ख दुप्पलि° ।

दत्तनेत्रपारणस्य समहासैन्यडम्बरं शम्बरमभियुञ्जानेन कञ्जाक्षनन्दनेन पूरयिष्यते मे मनोरथः ।

*शिष्यः* — भअवं, अहिमदसक्करब्भवहारस्स तह च्चेअ[1] देव्वं संपादेइ। एस उण मं संसओ बाहेइ संबरीसहस्सदुज्जओ वि संबरो कहं वम्महेण जेदव्वो त्ति। [*भगवन्, अभिमतशर्कराभ्यवहारस्य तथैव दैवं सम्पादयति। एष पुनर्मां संशयो बाधते शाम्बरीसहस्रदुर्जयोऽपि शम्बरः कथं मन्मथेन जेतव्य इति*]

*नारदः* — किमाह भवान्[2], 'कथं शम्बरो जेतव्य' इति ?

पशुतिर्यङ्नरसुरासुरव्यामोहकारिणि ।
मारे संख्यातमायस्य मायाः किं प्रभवन्ति ताः ॥२९॥

( *अग्रतो भुवम[3]वलोक्य, सहर्षसम्भ्रमम्[4]* ) अहो, शम्बरमार्गावग्राहिणं मन्मथरथमभितः परिक्षिपतोऽसुरबलस्याडम्बरः !

श्च्योतद्दानाम्बुजम्बालितधरणितलं बृंहितप्रौढिफक्कद्विक्कं प्रोच्चण्डशुण्डाविधुतिसरभसामोटितव्योमयानम् ।
तिर्यग्दन्ताभिघातप्रकटितबहलश्वभ्रमभ्रेष्वदभ्रं
वप्रक्रीडां भजन्तोऽनुकृतशिखरिणो दन्तिनः प्रोन्नदन्ति ॥३०॥

*शिष्यः* — भअवं, इदो वि दाव। [*भगवन्, इतोऽपि तावत्*] ( *संस्कृतमाश्रित्य* )

रिङ्खन्तः संख्यसीम्नि प्रखरखुरपुटोद्दामकुद्दालधाराधारालोद्दारितक्ष्मातलचलितरजोरुद्धरोदो[5]ऽन्तरालाः ।

---

१. ख एव्व । २. क भगवान् । ३. क ख भुवनम° । ४. ख 'सहर्षसम्भ्रमम्' इति नास्ति । ५. क °रोधो° ।

हेषाघोषान् विशेषादहह विदधतः सादिभिश्चाधिरूढै-
र्वन्तः कुर्वतेऽमी कुतुकमतितरां पश्यतां पश्य तावत् ॥३१॥

*नारदः* — एतांश्च,

रथ्यैः पथ्यनुकूलचङ्क्रमपरैः सारथ्यमातन्वतः
स्वच्छायातुरगातिपातरभसप्रोत्साहिभिः शोभितान्[1] ।
उत्खातस्खलनोच्चलद्ध्वजलतासंरुद्धपूषाध्वनः
संक्रीडच्चरणान्निशामय दृशामा[2]नन्दनान् स्यन्दनान् ॥३२॥

*शिष्यः* — भअवं, एत्थ अ एदेहिं। [*भगवन् अत्र चैतैः*] (*संस्कृत-माश्रित्य*)

पादन्यासनमन्महीकमलधुक्क्ष्वेलादलद्दिक्तटं
प्रोन्मीलच्छतचन्द्रनिह्नुतमहाशस्त्रान्धकारोदयम् ।
व्यावल्गत्तरवारिवारितपरं प्रक्रान्तचक्रभ्रमि
क्रीडद्भिः क्रियते स्म संयति[3] दृगानन्दो भटैरुद्भटैः ॥३३॥

(*सभयोत्कम्पम्*) हद्धि हद्धि, जलनिहिपूरगब्भपविट्ठस्स संअत्तिअस्स विअ पडिरोहिवाहिणीमज्झगअस्स मअरद्धअस्स कहं णाम णिक्कमणं होएज्जइ त्ति पज्जाउलम्हि। [*हा धिक् हा धिक्, जलनिधिपूरगर्भप्रविष्टस्य सांयात्रिकस्येव प्रतिरोधिवाहिनीमध्यगतस्य मकरध्वजस्य कथं नाम निष्क्रमणं भविष्यतीति पर्याकुलोऽस्मि*]

*नारदः* — वत्स, विस्रब्धो भव। यत्किञ्चिदेतज्जगदहंवीरस्य मारस्य। अयं हि,

---

१. क °हितैः शोणितैः। २. ख दृशोरा°। ३. क सम्प्रति।

चक्रैश्छिन्दन् भटानां करचरणशिरस्त्रासयन् प्रासघातै-
रश्वान् शश्वद्गदाभिर्मदकलकरिणः प्रोथयन्[1] क्रोधदीप्तः।
सप्रासङ्गान् शताङ्गान् सपदि शकलयन् मार्गणैर्मार्गहेतोः
पूषा पाथोदवृन्दादिव दितिजबलान्निःसृतः शम्बरारिः ॥३४॥

क्षणेन[2] चेदानीम्,

शस्त्रोत्कृत्तगजाश्वशश्वदैत्यपिशितस्नाय्वस्थिमेदोवसा-
मज्जान्त्रोच्चयविस्रगन्धिरुधिरस्रोतस्विनीदुस्तरम्।
तृष्यद्गृध्रसृगालकङ्ककरटं नृत्यत्कबन्धोल्बणं
दृप्यत्प्रेतपिशाचडाकिनिगणं जातं रणप्राङ्गणम् ॥३५॥

*शिष्यः* — भअवं, अदोवरं दुक्करं तक्केमि । जं अत्थंगओ थेरोसवंधू। ण विण्णाअदि अप्पकेरओ परकेरओ[3] वा गाढंधआरेहिं। एक्कल्ला खु रअणीए पुरिल्लदेव्वा होंति। [*भगवन्, अतः परं दुष्करं तर्कयामि । यदस्तङ्गतः कमलबन्धुः। न विज्ञायत आत्मीयः परकीयो वा गाढान्धकारैः । बलवन्तः खलु रजन्यां पूर्वदेवा भवन्ति*]

*नारदः* — कातर, मा विषीद। मन्ये मन्मथशस्त्रनिपातितभूयिष्ठचतुरङ्ग-सैन्येन शम्बरेण शाम्बरीबलादावि[4]ष्कृतस्य तामसस्यास्त्रस्य प्रभाव एवायम्। यतः,

पुञ्जैरञ्जनकल्पितैरिव पुनः कालाग्निरुद्राननो-
च्छिद्रैर्धूमभरैरिव प्रचलितैर्नीलाश्मशैलैरिव ।
पातालादिव निर्गतैः सुररिपुव्रातैः समन्तादिदं
मुष्णद्भिः प्रसरं दृशोर्निचुलितं गाढान्धकारैर्जगत् ॥३६॥

---

१. 'पोथयन्' मू० प्र० पा०। २. ख °णानेन। ३. क ख अप्पकेरो परकेरओ। ४. ख °वलाविष्कृ°।

*शिष्यः* — ( *साश्चर्यम्* ) भअवं, कप्पंते वि किल दोहिं अब्भहिआ दह एव्व दिणअरा समाणुम्मेसा सुणीअंदि[1] । किं एदं अअंडे मत्तंड-मंडलसहस्ससमुग्गमो ! [ *भगवन्, कल्पान्तेऽपि किल द्वाभ्यामभ्यधिका दशैव दिनकरा समानोन्मेषाः श्रूयन्ते । किमेतत्, अकाण्डे मार्तण्डमण्डलसहस्रसमुद्गमः !* ]

*नारदः* — वत्स, तामसास्त्रगर्वनिर्वापणनिरर्गलं प्रयोजितं[2] प्रसवायुधेन प्राभाकरमस्त्रम् । ततश्च,

**चूषन्तः सलिलं सरित्पतिसरित्कासारवापीगतं**
**गूढानां दिननायकाश्ममहसां दत्तावलम्बाः करैः ।**
**ध्वस्तध्वान्तभराः क्षणेन भुवनक्षेमङ्करप्रक्रियाः**
**पश्योद्यन्ति समन्ततः सरसिजश्रेयस्करा भास्कराः ॥३७॥**

*शिष्यः* — ( *सोद्वेगम्* ) भअवं, णूणं उवक्कतो लोअंतो पआव[इ]णा[3], जं[4] किल । [ *भगवन्, नूनमुत्क्रान्तः प्रजापतिना लोकान्तः । यतः किल* ] ( *संस्कृतमाश्रित्य* )

**कुर्वन्तो जगदेतदम्मयममी धारानुधाराशतै-**
**र्न्यग्भूतोन्मदकुम्भिबृंहितभरं गर्जाभिरूर्जस्वलाः ।**
**उत्केकारवमीक्षिताः शिखिकुलैरुद्योतिता विद्युता-**
**मुद्योतैः[5] करकानिपातपरुषा[6] वर्षन्ति वर्षाम्बुदाः ॥३८॥**

*नारदः* — वत्स, विसर्जितं हि दुर्जनेन पार्जन्यमस्त्रमिदम्[7] । कृतहस्तेन

---

१. ख °अंदी । २. ख °जितमिदं । ३. ख पआवइणा लोअंतो ।
४. क ख जदो । ५. क °रुद्योतिविद्योतितामुद्योताः । ६. क °परुषं ।
७. ख °मेतत् ।

चास्त्रेपु कन्दर्पेण तदीयदर्पसमुत्सारणचणं प्रयुक्तमेत्र वायव्यमस्त्रम्[1] । अमी हि,[2]

**वृक्षान् मङ्क्षु क्षिपन्तो दिशि दिशि रभसादर्णवान् घूर्णयन्तः**
**प्रासादान् सादयन्तः शिखरिकुलमिहामन्दमान्दोलयन्तः ।**
**धूलीभिर्दूषयन्तः सकलमपि जगत्तूलविद्रावमेता-**
**नन्दान् विद्रावयन्तो युगविगम इवोद्वान्ति झञ्झासमीराः ॥३९॥**

*शिष्यः* — ( *सोत्कम्पम्* ) भअवं किदं विसारविलोअणकोदुएण[3] । एदे खु समुब्भिण्णपक्खणीसंगा डोंगरा रिंगंता परिदो वि थगअंदि । अम्हाणं खु अग्गदो वि[4] णिग्गमणस्स वि अवआसो ण होज्जा । ता इदो दूलं ओसलम्ह । [*भगवन्, कृतं सैन्यविलोकनकौतुकेन । एते खलु समुद्भिन्नपक्षनिःसङ्गाः पर्वता रिङ्गन्तः परितोऽपि स्थगयन्ति । आवयोः खल्वग्रतोऽपि निर्गमनस्यावकाशो न भवेत् । तदितो दूरमपसरावः* ]

*नारदः* — अहो दुष्टता दैत्याधमस्य, यत्पार्वतमस्त्रमाविष्कृतम् !

**पादाक्रान्तदिगन्तरैः सुरपथप्रोल्लङ्घिशृङ्गच्छटा-**
**निर्यन्निर्झरिणीनिपातरभसोत्खातप्रपाताश्मभिः ।**
**पातालप्रतिमल्लगह्वरदरीनिष्पीतवातैश्चितं**
**लोकं लोकय सर्वतः प्रचलितैः खर्वेतरैः पर्वतैः ॥४०॥**

*शिष्यः* — ( *ससाध्वसम्* ) भअवं, किं एण्हि कादव्वं ? एदे खु वेअंडमेत्ता गंडसेला णिवडंति । अहं एको[5] एव्व पुत्तओ पिदुणो[6] । [*भगवन्,*

---

१. क 'कृतहस्तेन' इत्यत आरभ्य 'वायव्यमस्त्रम्' इति यावन्नास्ति । २. क तथाहि । ३. क 'किदं' इत्यत आरभ्य 'कोदुएण' इति पर्यन्तं नास्ति, °विआलोअण° इति मू० प्र० पा० । ४. ख 'वि' इति नास्ति । ५. ख एक्को । ६. ख पिदुणं ।

*किमिदानीं कर्तव्यम् ? एते खलु वेतण्डमात्रा गण्डशैला निपतन्ति । अहमेक एव पुत्रकः पित्रोः ]*

*नारदः* — (*विहस्य*[1]) वत्स, कृतं विचारेण । चिन्तित एवैतत्प्रतीकारोपायो वज्रहस्तानुजनन्दनेन । तथा हि,

**हेलाविक्षतपक्षतिक्षरदसृग्धाराप्रकारोल्वणं[2]**
**दीर्यच्छृङ्गसहस्रकीर्यदुपलं प्रच्छिन्नभिन्नाद्रयः ।**
**निर्घातैर्बधिरीकृतश्रुतिपुटालोकस्य शोकच्छिदः**
**स्वर्धाम्नां विततस्फुलिङ्गमभितो जृम्भन्ति दम्भोलयः ॥४१॥**

*शिष्यः* — भअवं, कहं इ उवसमिदामअप्पकोवस्स भूदावेसो खु इमो । जं किल,

**फुक्कारप्पसरंतदूसहविसज्जालवलीढड्जिदा-**
**सेसक्खोणिरुहा खणेण परिदो दीसं दे दव्वीअरा ।**

*[ भगवन्, कथञ्चिदुपशमितामयप्रकोपस्य भूतावेशः खल्वयम् । यत्किल,*
*फूत्कारप्रसरदद्दुःसहविषज्वालावलीदग्धा-*
*शेषक्षोणिरुहाः क्षणेन परितो दृश्यन्ते दर्वीकराः ॥ ]*

*नारदः* — वत्स, मा बिभीहि ।

**भोगत्रोटनचुञ्चु[3]चञ्चुशिखरैर्निष्ठ्यूतचञ्चत्फणा-**
**रत्नैर्यत्नलवं विनाऽपि त इमे तार्क्ष्यैः क्षयं निन्यिरे ॥४२॥**

*शिष्यः* — भअवं, जाणामि देच्चेण पयोजिदं [4]पण्णअत्थं पसमिदं पण्णअरि-

---

१. क 'विहस्य' इति नास्ति । २. क °रोज्वलं । ३. क ख °चञ्चु° ।
४ क ख पओजितं ।

वुद्धअणंदणविसज्जिदेण गालुडत्थेण । [*भगवन्, जानामि, दैत्येन प्रयोजितं पन्नगास्त्रं प्रशमितं पन्नगरिपुध्वजनन्दनविसर्जितेन गारुडास्त्रेण* ]

*नारदः* — वत्स, एवं न्युत्पद्यस्व ।

*शिष्यः* — भअवं, तक्केमि पडिहदेसु सम[1]त्थेसु वि णिअत्थेसु संबरो[2] माअयुज्झं[3] उवक्कमिस्सइ त्ति । [*भगवन्, तर्कयामि प्रतिहतेष्वेवं समस्तेषु निजास्त्रेषु शम्बरो मायायुद्धमुपक्रमिष्यतीति ।*]

*नारदः* — प्रतिविधास्यति चात्र द्वेधाऽपि समाश्रितमहामायो मन्मथः ।

*शिष्यः* — भअवं, पेच्छ पेच्छ[4] ।

उक्खादासिलदो खु एस पुरिसो भीसेइ मं भीसणो ।

[*भगवन्, पश्य पश्य,*
*उत्खातासिलतः खल्वेष पुरुषो भीषयति मां भीषणः ।*]

*नारदः* — नैतत् किञ्चन, हन्ति निर्घृणतरो व्याघ्रस्तमुग्राकृतिः ।

*शिष्यः* — णं एदस्स वि दप्पखंडणपरो दीसेइ पंचाणणो ।

[ *नन्वेतस्यापि दर्पखण्डनपरो दृश्यते पञ्चाननः* ]

*नारदः* — सक्रीडं शरभेण सोऽपि दमितः सर्वाण्डजक्ष्माभुजा ॥४३॥

अपि च,

---

१. ख °देसु एव्वं सम° । २. ख संबरेण । ३. क ख माआजुज्झं ।
४. ख पेक्ख पेक्ख ।

युगपदुपात्तदैत्यकुलनाथविरोचनभू-
खलचुरिभूपपङ्क्तिमुखभ मशरीरममुम् ।
दमयति दुर्ह्दं ननु गृहीतनृकेसरवद्-
वटुभृगुलूनुदाशरथिशौरिवपुर्मदनः ॥४४॥

**शिष्यः** — ( *साश्चर्यम्* ) भअवं, किं एदं एत्थ संगरंगणे ण संबरो ण वा से विसारहल्लबोलो[1] । संबररिऊ णवर पेक्खीअदि । [ *भगवन्, किमेतदत्र सङ्गराङ्गणे न शम्बरः न वाऽस्य सैन्यकोलाहलः । शम्बररिपुः केवलं प्रेक्ष्यते* ]

**नारदः** — वत्स, समभ्यस्ता तावदतः शम्बरान्माया तैरपि मयमारीचमेघनादमुखैर्मायाविभिः ।

**शिष्यः** — भअवं, अदोवरं दुक्करं तक्केमि जं एक्केण वि संबरेण जणिदव्वामोहस्स वम्महस्स संबरसहस्ससमाअमे का णाम विअअपच्चासा । [ *भगवन्, अतः परं दुष्करं तर्कयामि, यदेकेनापि शम्बरेण जनितव्यामोहस्य मन्मथस्य शम्बरसहस्रसमागमे का नाम विजयप्रत्याशा* ]

**नारदः** — वत्स, किं न पश्यसि तावद्भिरेव मन्मथप्रतिरूपकैरवनितले शरविलूनविनिपातितानेतान् । एषोऽपि शम्बरः सर्वतः प्रतिहतशाम्बरीकं मन्मथेन शरनिर्मथिताश्वसारथिर्निश्वसन्निव पन्नगः खिन्नमानसः खड्गखेटकमात्रावशेषायुधोऽप्रतिपत्तिमूढो वर्तते[2] ।

**शिष्यः** — ( *सहर्षं शाटीमुद्धु[3]न्वानः* ) साहु, वम्मह, साहु । णं वि संबरं ओहरिदगव्वं[4] किदवंतो सि । [ *साधु, मन्मथ, साधु । एनमपि मन्मथमपहृतगर्वं कृतवानसि* ]

---

१. ख °हलब्बोलो । २. ख °ढस्तिष्ठति । ३. क शादीं (टीं) धु° ।
४. ख °गव्वडंबरं ।

*(नेपथ्ये, विजयकाहलीशङ्खनिस्वनोन्मिश्रो दिव्यनिस्साणध्वनिः)*

**शिष्यः** — ( *ससम्भ्रमम्* ) भअवं कुदो एसो वरिसासमअसमुम्मीलंतजीमूदत्थणिअधीरो मंथाअलमहिज्जंतजलणिहिकल्लोलहलब्बोलगहीरो भेरीभणी सूणीअदि[1] ? [*भगवन्, कुत एष वर्षासमयसमुन्मीलज्जीमूतस्तनितधीरो मन्थाचलमथ्यमानजलनिधिकल्लोलकोलाहलगम्भीरो भेरीध्वनिः श्रूयते ?*]

**नारदः** — ( *सहर्षम्* ) वत्स, किं न पश्यसि ? अयं हि,

**सम्मोहनास्त्रमोहितमेतं करवालकृत्त[2]मूर्द्धानम् ।**
**शम्बरमवपात्य रथात् स्वरथे प्रियया समं स्मरो जयति ॥४५॥**

तदेष द्युसदां महोत्सवसमारम्भः ।

**शिष्यः** — ( *विलोक्य* ) भअवं, पअलिदो एव्व अमरावइं ससंभममिलिअसुरमहेसिकरपमुत्तेहिं पुप्फवरिसेहिं अवकरिज्जंतो समरलद्धविअअलच्छीसुहओ तेल्लोक्कमल्लो पसूणाउहो[3] । [*भगवन्, प्रचलित एवामरावतीं ससम्भ्रममिलितसुरमहर्षिकरप्रमुक्तैः पुष्पवर्षैरवकीर्यमाणः समरलब्धविजयलक्ष्मीसुभगस्त्रैलोक्यमल्लः प्रसूनायुधः* ]

**नारदः** — वत्स, तदेहि मन्मथविजयवार्ताहराणां महेन्द्रचराणां प्रथमप्रस्थितावावामेतावन्तमनेहसमेकान्तिनो भक्तान् निजसन्दर्शने-

---

१. क ख सुणीअदि । २. 'दत्त' इति मू० प्र० पा० । ३. क ख मीणकेदणो ।

नानन्दयितुम्[1], श्वेतद्वीपसीम्नि सुचिरं विहृत्य साम्प्रतमेवानुप्राप्तं भगवन्तमुपेन्द्रं महेन्द्रं चा[2]नेनोदन्तोपहारेणानन्दयावः ।

( इति निष्क्रान्ताः सर्वे )

इति जगन्नाथपण्डितकृतौ रतिमन्मथनाम्नि[3] नाटके चतुर्थोऽङ्कः ।



१. ख 'एतावन्त' इत्यत आरभ्य '°नन्दयितुम्' पर्यन्तं नास्ति । २. क °वन्तं महेन्द्रमुपेन्द्रञ्चा° । ३. क °मन्मथे नाटके चतुर्थोऽङ्कः । श्रीरस्तु । श्रीदेव्यर्पणमस्तु । अस्तु श्रीः, ख इति चतुर्थोऽङ्कः ।

## पञ्चमोऽङ्कः

*( [1]नेपथ्ये, सडिण्डिमारवमुच्चैः )*

भो भोः, पौराः, निदेशोऽयं देवस्य देवाधिराजस्य। यथा,[2]

**उच्छ्रीयन्तां पताकाः प्रतिभवनमधिद्वारदेशं कदल्यो**
**बध्यन्तां कीर्णगन्धद्रवकुसुमभरं तोरणाङ्काः क्रियन्ताम्।**
**रथ्याः सर्वाः समन्तादभिहतविविधातोद्यमद्धनाय भेर्य-**
**स्ताड्यन्तां यत्समायात्यधिगतविजयः सैष मारः कुमारः ॥१॥**

॥ चूलिका ॥

*( ततः प्रविशति रथस्थः[3] साध्वसनिमीलितदृशो मायावत्या हठालिङ्गनोत्पुलकाङ्गो मन्मथः )*

*मन्मथः* — ( *सुखातिशयमभिनयन् स्वगतम्* ) अये महदुपकृतमिमामपहरताऽपि मे शम्बरेण। यतः,

**विस्रस्तैणविलोलदृष्टि विगलद्बाष्पं सकाकुस्वरं[4]**
**कण्ठासक्तभुजालतं[5] परिगलत्संव्यानचेलाञ्चलम्।**
**गाढारोपितनिर्भरोन्नतकुचं भूयो मिलत्सम्भ्रमं**
**श्लिष्यन्ती स्वयमेव मां गमयते सौख्यातिभूमिं प्रिया ॥२॥**

---

१. मू० प्र० इतः पूर्वं 'श्रीदेव्यै नमः' इति लिखति, क 'श्रियै नमः' इति लिखति। २. क 'यथा' इति नास्ति। ३. क ख 'रथस्थः' इति नास्ति। ४. क विसरत्कम्पं स्खलज्जल्पितं। ५. ख °सज्जितदोर्लतं।

अतश्च,

रोमाञ्चितावयवमञ्चितघर्मवारि-
विध्वस्तधैर्यमितरस्वविवेकशून्यम् ।
आनन्दवारिधितरङ्गविगाह्यमानं
चेतो ममोल्लसति कोऽपि पुनः प्रकारः ॥३॥

( *निरूप्य*[1] ) हन्त, नाद्यापि समाश्वसिति भीरुरेषा ।

वित्रस्तैरलकैर्मुखेन विरलच्छायेन धौताधरै-
रास्रैर्निश्वसितानिलैरनुकलप्रोक्षिप्तवक्षोरुहैः ।
गात्रेणातितरां प्रवातकदलीमित्रेण नेत्रश्रिया
त्रस्तैणार्भकलोलया च महते खेदाय सेयं मम ॥४॥

( *प्रकाशम्* ) सुतनो, समाश्वसिहि, समाश्वसिहि । मम मन्मथस्यापि रथमधिरूढायाः कुतोऽधुनाऽपि तव त्रासाशङ्का !

**मायावती** — (*साश्वासमुन्मीलितलोचना मन्मथमवलोक्य, स्वगतम्*) को णु[2] एसो कारुणिओ इमादु[3] दुज्जातादो मं उद्धरिअ एव्वं[4] पेम्मणिब्भरं भणाइ । ( *सविस्मयम्*[5] ) कहं उण सुइरपरिइदे विअ एण्हि चेअ दिट्ठे वि[6] इमस्सिं मह ईरिसो राआणुबंधो । अहवा दिण्णं खु मे[7] जीविदं णेण । ( *प्रकाशम्* ) महाभाअ, मह मंदभाअणीए किदे वि महाभाएण दुल्लहप्पहवो अप्पा एद्दहं महंते साहसम्मि[8] णिओजिअ आआसिओ । [*कोन्वेष कारुणि-*

---

१. ख विलोक्य । २. क 'णु' इति नास्ति । ३. ख इमादो । ४. क ख एव्वं' इति नास्ति । ५. मू० प्र तथा ख 'सविस्मयम्' इति नास्ति । ६. क विअ । ७. क 'मे' इति नास्ति । ८. ख किदे दुल्लहप्पहवो अप्पा महाभाएण एद्दहं महंते साहसे ।

*कोऽस्माद् दुर्जातान्मामुद्धृत्यैवं प्रेमनिर्भरं भणति । कथं पुनः सुचिरपरिचित इवेदानीमेव दृष्टेऽप्यस्मिन् ममेदृशो रागानुबन्धः । अथ वा दत्तं खलु मे जीवितमनेन । (प्रकाशम्) महाभाग, मम मन्दभागिन्याः कृतेऽपि महाभागेन दुर्लभप्रभव आत्मा एतावन्महति साहसे नियोजयायासितः ]*

*मन्मथः* — मञ्जुभाषिणि, किं ब्रवीष्यात्मा मयाऽऽयासित[1] इति ?

मर्षयामि कथं ख्यातवीर्यस्त्वदपहारिणम् ।
सहते न हि पञ्चास्यः सटां लुम्पन्तमात्मनः ॥५॥

*मायावती* — (*सस्नेहबहुमानम्, स्वगतम्*) कहं णेण महाभाएण एत्थ जणे अप्पकेरअत्तणं[2] अणुवण्णीअदि[3] । जइ वा ण खु परकेरओ णाम अत्थि सप्पुरिसाणं । (*प्रकाशम्*) महाभाआ[4] एव्वं अणवेक्खिदप्पसरीरं परक्कमिअ असुरकरिमरिं मं मो[5]इदवंतस्स महाभाअस्स केण पच्चुवकरिस्सं । सव्वहा साहीणो खु अत्तहोदो एस जणो कअविक्कआणं । [ *कथमनेन महाभागेनात्र जने आत्मीयत्वमनुवर्ण्यते ! यदि वा न खलु परकीयो नामास्ति सत्पुरुषाणाम् । महाभाग, एवमनवेक्षितात्मशरीरं पराक्रम्यासुरबन्दीं मां मोचितवतो महाभागस्य केन प्रत्युपकरिष्यामि । सर्वथा स्वाधीनः खल्वत्रभवत एष जनः क्रयविक्रययोः* ]

*मन्मथः* — (*सप्रमोदम्*) कृतज्ञे, किमिदमपि वक्तव्यम् ! (*निपुणं निरूप्य सवितर्कमात्मगतम्*)

---

१. क °त्मायमाया° । २. ख °केरत्तणं । ३. '°ण्णिअदि' इति मू० प्र० पा० । ४. ख °भाअ । ५. ख °मरीं मो° ।

**संस्थानं वपुषस्तदेव सुषमा सैवाननेन्दोरियं**
**नेत्राम्भोरुहयोस्तदेव सरसं साकूतविप्रेक्षितम् ।**
**प्रेमार्द्रं वचनं तदेव सुतनोरस्या न जाने परं**
**सैव स्यात् किमियं न वेति तु कुतः सन्देग्धि मे मानसम् ॥९॥**

अथवा,

असुराभिमर्शजन्मा परिक्लिष्टतैव रूपस्य प्रियायां मे विकल्पहेतुः । समुत्सुका च ता[1]वदियं स्वजनदर्शनेन[2]स्यात् । तदेनां यावत् पितृकुलं प्रापयामि (*इति रथेन परिक्रामन् आकाशे*) कोकिलक, किं ब्रवीषि, "सम्प्रत्यत्रैव तत्र[3]भवतो रागस्य भवने सन्निहितायै भगवत्यै महाभागायाश्च रत्या गुरु[4]जनायास्मदागमनं निवेदयितुं गच्छामी"ति । भद्र, तथा क्रियताम् । अहमप्यनुपदमागत एव तावत् । अभिवादनीया ह्यकारणवत्सला मे भगवती । (*इति किञ्चिदन्तरं गत्वा रथादवतीर्णो माया[5]वत्या सह रागस्य गृहे[6] प्रवेशं नाटयति*)

(*ततः प्रविशत्यासनोपविष्टा रत्या पितृभ्याञ्च तस्याः सखीजनेन चोपा[7]स्यमाना सर्वार्थसाधिका वशिनी च*)

*सर्वार्थसाधिका*— (*स्वगतम्*)

**किमपि जनितो रागोऽन्योन्यं रतिस्मरयोरना-**
**कलितमनयोः प्राप्ता युक्त्या विपच्च निराकृता ।**

---

१. ख उत्सुका ता° । २. '°दर्शने' इति मू० प्र० पा० । ३. क सम्प्रत्येव तत्र° । ४. ख °वत्यै रत्याश्च गुरु° । ५. क °दवतीर्य माया°, ख °दन्तरमतिक्रम्य माया° । ६. ख रागगृहे । ७. ख रत्या तस्याः पितृभ्यां चोपा° ।

परिणयविधिं निर्वर्त्यैकं[1] तु शिष्टमथो पुनः
पदसरसिजं सेवे मातुः स्वनुष्ठितशासना ॥७॥

मन्मथः — ( *सर्वार्थसाधिकां निर्वर्ण्य, सगौरवमात्मगतम्*[2] ) अहो, माहानुभाव्यं भगवत्याः ? तथा ह्यस्याः,

चक्षुर्दयारसार्द्रं चेतोवृत्तिः प्रसन्नगम्भीरा ।
तुलनातीता मूर्तिस्तेजस्तेजस्विनामपि दुरापम्[3] ॥८॥

( *रतिमवलोक्य सविस्मयम्* ) केयं प्रियारूपसंवादिनीमाकृतिं बिभ्रती भगवत्याः पार्श्वं परिष्करोति ? ( *वितर्क्य*[4])

इयं सा किं जज्ञे सुतनुरुत सैवेयमभवद्
विभिन्नेवैते द्वे जगति जयतोऽन्योन्यसदृशौ ।
प्रियाया मे नास्मिन् क्वचन सदृशी कापि घटते
प्रियाभूते लोके तदिदमपि[4] हि भ्रान्तिलसितम् ॥९॥

कुतो वा भ्रान्तिर्यत्प्रबोधवतोऽपि मे पुरः स्फुरत्येवेयम्[5] ।

रतिः — ( *मन्मथं दृष्ट्वा सानन्दम्* ) दिट्ठिआ लद्धविअओ एस महाभाओ कुसली एत्थ एव्व समाआदो[6] । ( *मायावतीमवलोक्य, सासूयम्* ) का णु एसा तरट्टिआ अहं विअ मह वि दुल्लहं इमस्स महाभाअस्स पस्ससेवणसुहं अणुहोइ ।

[*दिष्ट्या लब्धविजय एष महाभागः कुशल्यत्रैव समायातः । का न्वेषा तरुणी अहमिव ममापि दुर्लभममुष्य महाभागस्य पार्श्वसेवनसुखमनुभवति* ]

---

१. क निर्वृत्यैकं । २. ख स्वगतं । ३. क °मपि दुर्निरीक्षम् । ४. 'सवितर्क' इति मू० प्र० पा० तथा ख—ग्रन्थे नास्ति । ५. ख तदहमपि ख 'इयम्' इति नास्ति । ६. ख समाअदो ।

*( सवितर्क[1] कृतमाश्रित्य )*

यातोऽहं किममुष्य पार्श्वमधुना वैयात्यलब्धास्पदा[2]
प्राप्तः किं नु स एष वा परिसरं प्रेम्णा स्वयं मामकम् ।
अभ्याशे घटते कथं गुरुजनस्यैतच्च वा पश्यतो
जाने कावपि सङ्गतावहमिव प्रेयानिवैतावुभौ ।।१०।।

*( इति विस्मितस्तिमिताऽवतिष्ठते )*

**मायावती** — *( रतिं विलोक्य[3], स्वगतम् )* कहं विअ अहं अज्जाणं समीवे ठिअ म्हि[4] । *( विमृश्य )* अम्हो मह वामोहो एत्थ एव्व अवट्ठिआए[5] । जं पस्सगओ खु इमो महाभाओ । अण्णं वि[6] एसा दाव[7] ईसारोसकसाइदेण चक्खुणा मं पेक्खइ । ण उण[8] अप्पा अप्पणो असूआभाअणं होजाइ[9] । ता का वि अण्णा एसा मह सरिसं रूवं वोलंबइ[10] ।

*[ कथमिवाहमार्याणां समीपे स्थिताऽस्मि । अहो मम व्यामोहोऽत्रैव पर्यवस्थितायाः, यत्पार्श्वगतः खलु मेऽयं महाभागः । अन्यच्चैषा पुनरीर्ष्यारोषकषायितेन चक्षुषा मां पश्यति । न पुनरात्माऽऽत्मनोऽसूयाभाजनं भवेत् । तत्काऽप्यन्यैषा मम सदृशं रूपमवलम्बते ]*

**सख्यौ** — *( मन्मथमवेक्ष्य जनान्तिकम् )* दिट्ठिआ पच्चागअं पिअसही-

---

१. क सविचिकित्सं । ख °र्कव्यामोहम् । २. ख °धुना पुण्यैः पुरा सञ्चितैः ।
३. ख रतिमव° । ४. ख सविहं गअ म्हि । ५. ख पज्जवट्ठिदाए ।
६. ख अ । ७. ख उण । ८. ख खु । ९. क होइ, ख होज्जाइ ।
१०. क आलंबइ, ख ओलंवेइ ।

जीविदेण। ( *मायावतीं निरूप्य च*[1] ) कहं णो पिअसही एक्क-पअम्मि विमुक्ककण्णआणुरूवसमाअरणा एआरिसी संवुत्ता। जं गुलुअणसविहे वि वल्लहपस्सगआ णिव्विसंकं ठाइ! [ *दिष्ट्या प्रत्यागतं प्रियसखीजीवितेन। कथमावयोः प्रियसखी एकपदे विमुक्तकन्यकानुरूपसमाचरणा एतादृशी संवृत्ता। यद् गुरुजनसविधेऽपि वल्लभपार्श्वगता निर्विशङ्कं तिष्ठति* ]

*रागः* — ( *मायावतीं मन्मथञ्च वि*[2]*लोक्य; सहर्षसम्भ्रमौत्सुक्यम्* ) हन्त, प्राप्तेयं मे वत्सा? एष च विजयी कुमारः!

मुदिता — (सबाष्पम्[3]) एसा मे जादा दिट्ठिआ मिच्चुमुहादो पच्चागआ। [ *एषा मम जाता दिष्ट्या मृत्युमुखात् प्रत्यागता* ]

( *इत्युभौ सरभसमुत्थातुमिच्छतः* )

*रतिः* — ताद अज्जू[4] एसा खु अहं एत्थ एव्व थक्कामि[5]। [ *अम्ब, तात एषा खल्वहमत्रैव तिष्ठामि* ]

( *मुदितारागौ वैलक्ष्यं*[6] *नाटयतः* )

*वशिनी* — ( *आत्मगतम्* ) अहो सैवामीषां व्यामोहानुवृत्तिविदितमायावती-निर्माणवृत्तान्तानामपि।

*सर्वार्थसाधिका* — ( *मन्मथं निर्वर्ण्य सवात्सल्यम्, स्वगतम्* )

---

१. ख 'च' इति नास्ति। २. ख °चाव°। ३. 'सबाष्पम्' इति मू० प्र० तथा क ग्रन्थे नास्ति। ४. ख अज्जु ताद। ५. 'थक्कामी' इति मू० प्र० पा०। ६. 'वैलक्षं' इति मू० प्र० पा०।

**विजितारातिरङ्गेषु विक्षतो हेतिभिर्द्विषाम् ।**
**हृदयं मे कुमारोऽयं धिनोति च धुनोति च ॥११॥**

*मन्मथः* — ( *अग्रतोऽवलोक्य* ) एषा हि भगवती वात्सल्यविस्फारितेनाक्षणा[1] पिबन्तीव मामवेक्षते, गुरुजनश्चायम् । यावदुपसर्पामि । ( *इत्युपसृत्य* ) भगवति, अभिवादयतेऽयं मन्मथः ।

*सर्वार्थसाधिका*— कुमार, आम्रेडितकल्याणो भूयाः । ( *इति सविधमुपवेश्य पाणिना मन्मथस्याङ्गमङ्गं परामृशन्ती तिरोहितक्षतरेखं करोति* )

*मायावती*—भअवइ, पणमामि ।

*सर्वार्थसाधिका*— वत्से, अभिमतवरसङ्गता भूयाः । (*मुदितारागौ प्रदर्श्य*[2] *मायवतीमन्मथौ प्रति*) कुमार[3], वत्से[4] वत्सायाः पितरौ, प्रणमतमेनौ[5] । ( *उभौ तथा कुरुतः* )

*रागः* — कुमार, कल्याणि, चिरं जीवतम् ।

*मुदितारागौ*— सुहिदा होंतु भवंता[6] । [ *सुखिनौ भवतं भवन्तौ* ]

*सर्वार्थसाधिका*— ( *मुदितारागौ प्रति* ) महाभागौ, एषा खलु मायावती नाम वत्सां रतिमसुराधमादपवाहयितुं मया योगप्रभावनि[7]र्मिता धर्मतो वां दुहितेव ।

*मन्मथः* — ( *स्वगतम्* ) अहो भगवत्याः प्रभावो वात्सल्यञ्च मयि ।

---

१. ख प्रेमविस्तारितेनाक्षणा । २. क मुदितां रागञ्च प्रदर्श्य, ख निर्दिश्य ।
३. ख 'कुमार' इति नास्ति । ४. ख वत्सावेतौ । ५. क °मेतौ ।
६. क भोदु भवंता ख भवंतां । ७. क ख °प्रभावान्नि° ।

*रतिः* — ( *स्वगतम्*[1] ) अम्हो एदस्सिं जणे पक्खवादो भअवदीए[2]।
[ *अहो एतस्मिन् जने पक्षपातो भगवत्याः* ]

*रागः* — (*सप्रश्रयम्*) भगवति, किमिहापि संशयो यदाह भगवती ?

(*इति मायावतीमङ्कमुपनीय मूर्ध्नि समाजिघ्रति*[3])

*मुदिता* — जादे, जादाए जीविदप्पदाइणि, इदो आअच्छ । [ *जाते, जाताया जीवितप्रदायिनि, इत आगच्छ* ]

( *इति प्रेमनिर्भरं तामालिङ्गति* )

*सर्वार्थसाधिका* — ( *रतिं प्रति* ) वत्से, इयं ते स्वसा, प्रतिगृहाणैनाम् ।

*रतिः* — ( *मायावतीं हस्ते गृहीत्वाऽऽत्मनः सकाशमानयति*[4])

*मन्मथः* — ( *रतिमायावत्यौ निरूप्य साशंसमात्मगतम्*[5] )

**अपि स्यान्मे पाणिग्रहणमुभयोस्तुल्यमनयो[6]-**
**र्भवेतां वा स्निग्धे अपि जहदसूयं पुनरिमे ।**
**सहैताभ्यां रात्रावपि कुसुमतल्पं श्रियवतो**
**भवेत् स्वैरं पार्श्वद्वितयपरिवृत्तिश्च सफला ॥१२॥**

[7]*मायावती* — ( *सवितर्कमात्मगतम्* ) शम्मिट्ठाए विअ परोवसज्जणीभूदाए मह दुल्लहो खु पडिभाइ महाभाएण समाअमो, अह वा वच्छला

---

१. मू० प्र० तथा क 'स्व०' इति नास्ति । २. ख °वईए । ३. क ख °घ्नि जि° । ४. °शमुपनयति । ५. क साशंकमा, ख साशंसं स्व० । ६. ख °णमनयोस्तुल्यमुभयोर् । ७. इदं पूर्णमेव मालतीवाक्यं ख ग्रन्थे एव लिखितम् ।

खु भअवई । [ *शर्म्मिष्ठाया इव परावर्जनीभूताया मम दुर्लभः खलु प्रतिभाति महाभागेन समागमः । अथवा प्रियवत्सला खलु भगवती* ]

*सर्वार्थसाधिका*— ( *मुदितारागौ प्रति* ) महाभागौ, इयमपि मायावती कुमारमन्मथमेव वरमर्हति ।

*रागः* — यदादिशति भगवती ।

*मुदिता* — ( *साङ्गीकारमिव* ) जं अणुमदं पिअसहीए । [ *यदनुमतं प्रियसख्याः* ]

*सर्वार्थसाधिका*— (*रतिं प्रति*) वत्से, निर्वोढव्यकुटुम्बभरया भवत्या तावदसावात्मनः प्रत्यनन्तरीक्रियताम् ।

रतिः — ( *सेर्ष्यावहित्थम्* ) भअवइ, परवंतो खु अयं जणो तुम्हेहिं[१] । [ *भगवति, परवान् खल्वयं जनो युष्माभिः* ]

*सख्यौ* — ( *सवैमनस्यम् , अपवार्य* ) एदं वि एक्कं हिअअसल्लं आवडिदं[२] खु णो पिअसहीए । [*एतदप्येकं हृदयशल्यमापतितं खलु नौ प्रियसख्याः*]

*मन्मथः* — ( *सानन्दं, स्वगतम्* ) अहो भावज्ञता भगवत्याः, यन्मे मनोरथानुरूपमादिष्टम् ।

[३]*मायावती* — किदम्हि चरिअत्था अहं भअवईए अप्पणो णिम्मिदी । [*कृताऽस्मि चरितार्थाऽहं भगवत्या आत्मनो निर्मितिः* ]

---

१. ख खु तुम्हेहिं अयं जणो । २. ख एक्कमावडितं हिअअ° । ३. मायावत्या वाक्यमिदं केवलं ख ग्रन्थे लिखितम् ।

मन्मथः — (*मायावत्याः कृते स्वस्मिन्नातिप्रीतामिव रतिं निर्वर्ण्य*)

औदासीन्यमनादृतस्मितरुचा वक्त्रेन्दुना सूचय-
न्त्यंसन्यस्तकपोलमन्तिकजुषः सख्याश्चिरं तस्थुषी ।
तिर्यक् संवलितेन किञ्चिदरुणप्रान्तेन भुग्नभ्रुणा[१]
वामाक्ष्णाऽद्य निरीक्षते प्रियतमा सैवान्यमन्येव माम् ॥१३॥

किञ्च,

अरालभ्रूवल्लिस्तिमिततरतारं विवलितं
तिरः शोणां छायां परिवहदपाङ्गे मुकुलितम् ।
स्वपार्श्वस्थामेतां प्रतिकिरति चक्षुर्वरतनुः
सपत्न्यां सोदर्यामपि हि सुलभेर्ष्या युवतयः ॥१४॥

अथाप्यवशोदित्वरेणास्या भावविशेषेण[२] व्यज्यत एव मय्यनुरागः ।
तथाहि,

गुरुजनसविधे मां प्रेक्ष्य तीर्णप्रवासं
कथमपि न कृशाङ्गी हर्षमाविष्करोति ।
तदपि स विदितो मे दूरगूढोऽन्तरस्याः
पुलकमुकुलपाल्या[३] मण्डयन्त्याङ्गमङ्गम् ॥१५॥

सर्वार्थसाधिका— ( *वशिनीं प्रति* ) ब्रूहि वत्से, मद्वचसा तत्रभवन्तं समहेन्द्र-मुपेन्द्रम् । 'भगवन्, अद्यैव प्रशस्तो मुहूर्तो निवेद्यते मौहूर्तिकैः कुमारमन्मथस्य रतिमायावतीपाणिग्रहणमङ्गलविधौ । तदत्रोपवन-कल्पद्रुमतले कल्पितमण्डनः कल्याणमण्डपः परिष्क्रियतामचिरात् सपरिवारमत्रभवद्भिरि"ति ।

---

१. क °भ्रुवा । २. ख °रेण भावविशेषेणास्या । ३. °पि तु····गूढोऽय-मस्या मनसि फलकपाल्या ।

*वशिनी* — यदादिशति भगवती। (*इति निष्क्रम्य पुनः पुरुषेण सह प्रविश्य*) भगवति, अभिनन्दितभवत्सन्देशेन साग्रजेन श्रीरागेण प्रहितोऽयमाप्तः पुरुषः।

*पुरुषः* — (*सप्रणामम्*) भगवति, एषा भगवतः प्रणयोक्तिः—यथा[१], प्रतिपाद्येते अधुनैव वत्से देवसेनेन्द्रसेने तत्रभवते महासेनाय। अतो भगवत्या वत्सं मन्मथं सखायं रागञ्च सहादाय समागतयाऽनुभूतैतदुत्सवदर्शनसुखमनुपदमेव निर्वर्तयिष्यते वत्सयोरपि[२] रतिमायावत्योः करग्रहमङ्गलमिति।

*सर्वार्थसाधिका*— (*सहर्षं, मन्मथं प्रति*) कुमार, समुचितमाचरितं तत्रभवद्भ्यां स्वस्त्रिये स्वस्याथ च महोपकारिणि तारकवैरिणि। आचारश्चायं शिष्टानुमतो यत्कन्याप्रतिपादनस[३]मनन्तरं वधूपरिग्रह इति। तत्सम्भावयतु भवांश्चिराय निजसन्दर्शनेनोत्सुकं बन्धुजनम्[४]। (*पुरुषमवेक्ष्य*) भद्र, निवेदय भगवते। मया पुनर्महाभागेन च रागेणानयोर्वत्सयोः परिणयोपकरणसिद्धिव्यापृततयाऽ[५]त्रैव श्रवणरसायनीकरिष्यते[६] स महोत्सव इति।

*मन्मथः* — यथा नियुङ्क्ते[७] भगवती। (*इति निष्क्रान्तः, पुरुषश्च*[८])

*रतिमायावत्यौ*— (*सोत्कण्ठमात्मगतम्*) हिअअ[९], पंचसखणमेत्तभाविणीए वि मणरहसिज्झीए कथं एव्वं[१०] पज्जूसुअं सि? अम्हो सच्चं खु

---

१. मू० प्र० तथा क ग्रन्थे 'यथा' इति नास्ति। २. *ख* 'अपि' इति नास्ति। ३. °प्रदानस°। ४. *ख* °नेन समुत्सुकं गुरुजनं। ५. *ख* °पृताभ्यां। ६. क °यनीक्रियते। ७. क नियुज्यते। ८. क °न्तः सह पुरुषेण, *ख* इति सप्रणामं पुरुषेण सह निष्क्रान्तः। ९. क 'हृदय' इति नास्ति। १०. *ख* एद्दहं।

एदं लोअवअणं[1] जं पडिक्खिदाए वि पाअणिप्पत्तीए उण्होवसमविलंबासहणत्तणं त्ति । [*हृदय, पञ्चषक्षणमात्रभाविन्यामपि मनोरथसिद्धौ कथमेतावत्पर्युत्सुकमसि ? अहो सत्यं खल्वेतत् लोकवचनं यत्प्रतीक्षितायामपि पाकनिष्पत्तावुष्णोपशमविलम्बासहनत्वमिति* ]

( *नेपथ्ये दिव्यदुन्दुभिध्वनिः कुसुमवृष्टिश्च* )

*सर्वार्थसाधिका*— ( *आकर्ण्य*[2] *सहर्षम्* ) जाने निर्वृत्तपाणिपीडनमङ्गले कल्याण्यौ देवसेनेन्द्रसेने ।

*वशिनी* — (*कर्णं दत्वा ससम्भ्रमम्* ) भगवति, यथाऽयमधिप्रतोलि मुखरितनिखिलहरिन्मुखं निबिडीभवति विविधातो[3]द्यनिस्वनाडम्बरः, तथा तर्कयामि नेदीयानितो जन्यवर्ग इति ।

*सर्वार्थसाधिका* — शोभतेतरां हि शोभने विधौ त्वरातिरेकः । ( *मुदितारागौ प्रति* ) महाभागौ, युवामप्येताभ्यां सह वत्साभ्यां नेदीयसीं कुरुतं विवाहमङ्गलवेदीम् ।

*रागः* — यदादिशति[4] भगवती । (*इति वशिनीवर्जं सहेतराभिर्निष्क्रान्तः*[5])

( *नेपथ्ये* )

अपि कुशलमत्रभवत्यै ।

*सर्वार्थसाधिका*— (*तदभिमुखमवलोक्य*) हन्त, सम्प्राप्ता एव सम्बन्धिनोऽमी ।

---

१. ख 'लोअवअणं' इति नास्ति । २. क 'आकर्ण्य' इति नास्ति । ३. ख इन्द्रसेनादेवसेने । ४. क निखिलातोद्य° । क यदाज्ञापयति । ख 'यदादिशति भगवती' इति नास्ति । ५. ख उभौ वशिनीवर्जं सहेतराभ्यां निष्क्रामतः ।

( इति ससम्भ्रममुत्थाय तान् प्रति सादरम्[1] ) स्वागतं तत्र[2]-भवद्भ्योऽलङ्क्रियन्तां सोपबर्हाणि महार्हाण्यास्तरणानि ।

( इत्युपविष्टेषु तेषु स्वयमासने समुपविशति )

(नेपथ्ये मङ्गल्यवादित्रनिस्वनानन्तरं[3] पुरोधसोरेकः पठति)

आस्थानीमुपसेदुषां सुरमहर्षीणां पुरः कीर्तिते
शैलेन्द्रेण निजेऽन्वये[4]ऽथ विधिना देवस्य शम्भोः कुलम् ।
वक्तुं मौनजुषा प्रवर्तितमपि स्वैरं तदा सस्मितैः
सर्वैरप्युररीकृतं परिणये वाङ्निश्चितं पातु वः ॥१६॥ इति[5]

*वशिनी* — ( *सोल्लासम्* ) भगवति, वधूवराणां वाग्दानसम्पत्ति[6]सूचकं पद्यमिदम् ।

( *पुनर्नेपथ्ये* )

[7]*द्वितीयः* — गौरीशङ्करयोः पुराञ्जलिपुटे स्वेदोदबिन्दूपमा
न्यस्ता मूर्ध्नि मिथो हिमांशुमभितस्ताराानुकारास्ततः ।
कीर्णाश्चाथ समन्ततः सुरकरोन्मुक्तप्रसूनायिता
मुक्ताः सन्तुतरां करग्रहविधौ भव्याय वो[8] भूयसे ॥१७॥

*सर्वार्थसाधिका*— ( *सानन्दम्* ) निर्वृत्तं हि पाणिग्रहणमङ्गलं वत्सानाम् ।

---

१. ख 'सादरं' इति नास्ति । २. ख स्वागतमत्र° । ३. ख मङ्गल्यवादित्र-निस्वनानन्तरं । ४. ख निजावन्ये । ५. मू० प्र० तथा ख ग्रन्थे 'इति' इति नास्ति, क इति । नः इति वा । ६. क 'सम्पत्ति' इति नास्ति । ७. ख इतः पूर्वं 'मङ्गलवादित्रनिस्वनानन्तरं' इति लिखति । ८. क नो ।

[1]*वशिनी* — ( *पुरतो निरूप्य* ) भगवति, एते खलु सम्बन्धिनो जिगमिषन्त इव स्वान् गृहान् प्रत्यालक्ष्यन्ते ।

( *पुनश्च नेपथ्ये* )

अत्रभवति, सुविहितसमुदाचाराः स्मः, तदनुजानीहि नः, गृहान् प्रति गमनाय[2] । अयञ्च वधू[3]परिष्कृतो वत्सो मन्मथः समनुप्राप्त-स्तत्रभवतीमभि[4]वादयितुम् ।

*सर्वार्थसाधिका*— ( *जागरूकादरं, जन्यान्*[5] *प्रति* ) साधयन्तु तत्रभवन्तः सनाथीकृतमिदं कुलं भवद्भिः[6] । ( *इति प्रस्थितेषु तेषु सर्वेषु पुनरासनमध्यास्ते*[7] )

( *ततः प्रविशति गृहीतविवाहोचितने*[8]*पथ्याभ्यां रतिमायावतीभ्यां सह वरा*[9]*लङ्कारी मन्मथः* )

*मन्मथः* — (*सानन्दमात्मगतम्*) अहो परिणामरमणीयता दैवानुकूल्यस्य ।

**प्रथमं सुखाङ्कुरोद्गति[10]रवग्रहोऽनन्तरं तदुन्मेषः[11] ।**
**पुनरपि तत्परिहारो मङ्गलमधुना तु मङ्गलोन्मिश्रम् ॥१८॥**

*सर्वार्थसाधिका* — ( *सदारं मन्मथमवलोक्य सोल्लासं, स्वगतम्* ) अयं हि,

---

१. वशिन्या वाक्यमिदं ख ग्रन्थे नास्ति । २. 'गृहान् प्रति गमनाय' इति ख पुस्तके अधिकमस्ति । ३. ख °ञ्च समनुप्राप्तो वधू° । ४. ख °थस्तत्र-भवतीमभि° । ५. ख दर्शितादरं सम्बन्धिनः । ६. मू० प्र०, क सभवद्भिः । ७. 'इति' इत्यतः 'मध्यास्ते' पर्यन्तं, ख पुस्तके नास्ति । ८. क विवहने° । ९. 'गृहीतवधूनैपथ्याभ्यां प्रियतमाभ्यां सह च(व)रा° । १०. क सुखीकरोद्-गति°, ख शुभाङ्कुरो° । ११. तदुन्मेषे इति मू० प्र० पा०, ख प्रति पाठश्च ।

रत्या च मायावत्या च रम्यपार्श्वद्वयः स्मरः ।
प्रतिभाति सुधासूतिः फल्गुन्योरिव मध्यगः ॥१९॥

*(मन्मथः सविनयमुपसृत्य प्रियतमाभ्यां सह सर्वार्थसाधिकायाः पादावुपसंगृह्णाति )*

***सर्वार्थसाधिका*** — *( सप्रेम तानभिनन्दन्ती*[1] *)*

वेले सिन्धुरिव त्वं वध्वौ तुल्यं कुमार धिनु शश्वत् ।
वत्से युवां जुषेथां गङ्गायमुने इव प्रियमभिन्ने ॥२०॥

***मन्मथः*** — *( सप्रश्रयम्*[2] *)* भगवति, किं बहुनोपचारोक्तिपल्लवनेन ! सर्वथा वात्सल्यानुरूपमाचरितं गर्भरूपेषु भगवत्या[3] ।

[4]***सर्वार्थसाधिका*** — कुमार, निदेशोऽयमीदृशः श्रीमत्याः[5] सिंहासनेश्वर्याः । यथा, वत्से, निर्वृत्ते[6] परिणयोत्सवे वत्सं मन्मथं निजसन्दर्शनावसरदानेन कृतार्थयिष्य इति[7] ।

***मन्मथः*** — *( सप्रमोदम् )* भगवति, धन्योऽस्मि । किमन्यदितोऽप्याशास्यमस्य जनस्य[8] ?

***सर्वार्थसाधिका*** — तदेहि[9], यामः श्रीमातुश्चरणारविन्दमूलम् । *( इत्युत्थाय नेपथ्याभिमुखी*[10] *रागमापृच्छ्य*[11] *सभार्येण मन्मथेन सह*[12]

---

१. क सर्वानभि°, ख °नभिनद्य । २. 'सप्रश्रयम्' इति मू० प्र० तथा ख पुस्तके नास्ति । ३. क भवत्या । ४. क ग्रन्थे सर्वाथसाधिकाया वाक्यमिदं, अग्रे च मन्मथस्य वाक्यं लिखितं नास्ति । ५. ख 'श्रीमत्याः' इति नास्ति । ६. ख निष्पन्ने । ७. ख °र्थयिष्यत इति । ८. 'जनस्य' इति मू० प्र० नास्ति । ९. ख 'तदेहि' इति नास्ति । १०. क °मुखं । ११. ख °मामन्त्य । १२. क 'सह' इति नास्ति ।

परिक्रामन्ती समुन्नतगोपुरं श्रीपुरमासाद्य पुरतो[1] वितीर्णचक्षुर्मन्मथं प्रति[2] ) कुमार, इदं हि महार्हमणिगणसुन्दरमम्बायास्त्रिपुरसुन्दर्या[3] मन्दिरम् । यावत्प्रविशामः ।

(इति सर्वे तत्र[4] प्रवेशं नाटयन्ति)

मन्मथः — ( सर्वतोऽव[5]लोक्य साश्चर्यम्, स्वगतम् )

स्वप्रभेण तदनेन जनन्याः सद्मना दिनकराद्यपि तेजः ।
अभ्यभावि यदि नाम परेषां चाक्षुषी प्रभवतु क्व नु शक्तिः ॥२१॥

( ततः प्रविशति सिंहासनगतस्य भगवतः कामेश्वरस्याङ्कं परिष्कुर्वती।देवी विभवतश्च परिवारः )

देवी — (सर्वार्थसाधिकामनूपनमतो वधूवरानवलोक्य, स्वगतम् ) निर्व्यूढाऽस्मन्निदेशा हि वत्सैषा । वत्सश्चायं कामः पूर्ण[6]कामः सम्पन्नः । (इति सप्रसादं तान् कटाक्षैरनुगृह्णाति )

मन्मथः — ( दूरादेव गदम्बामव[7]लोकयन्, सहर्षरोमाञ्चसम्भ्रममात्मगतम् )

मयूखैः प्रत्यङ्गाद् बहलमुदयद्भिर्विदधती
समुन्मीलद्बालातपमिव हरिच्चक्रमखिलम् ।
दधाना सौभाग्यं किमपि ललिताम्बाऽतिललितं
ममेदानीं दिष्ट्या सरणिमवतीर्णा नयनयोः ॥२२॥

---

१. ख पुरो । २. ख 'मन्मथं प्रति' इति नास्ति । ३. ख 'त्रिपुरसुन्दर्याः' इति नास्ति । ४. ख 'तत्र' इति नास्ति । ५. ख °तो वि° । ६. ख कामः प्रकामं पूर्ण° । ७. ख जगज्जननीमव° ।

अये चरितार्थोऽस्मितराम्, यतः,

उदारान् स्वाभाव्यात् सितसरसिजश्रीसहचरान्
मयि स्मेरस्मेरानमृतलहरीगर्भशिशिरान् ।
विधुन्वानांस्तापत्रितयमपि लोकैकजननी
जया[1]धारा तुङ्गाननुकलमपाङ्गान् विकिरति ॥२३॥

*(इति ससम्भ्रममुप[2]सृत्य प्रेयसीभ्यां सह देव्याश्चरणारविन्दयो रत्नानि विकीर्य[3]साष्टाङ्गं प्रणमति)*

[4]*सर्वार्थसाधिका*— (*प्रणम्योत्थाय*) अम्ब[5], एष वधूसहितः कुमारमन्मथोऽभिवादयते ।

*देवी* — वत्साः, सानन्दमेधध्वम् । (*इति सर्वार्थसाधिकामवलोकते*[6])

*सर्वार्थसाधिका*— कुमार, वत्से[7], समुत्तिष्ठत । प्रसादसुमुखी सम्पन्ना युष्मासु श्रीमाता ।

*मन्मथः* — (*सदारः समुत्थाय सादरं कृताञ्जलिबन्धः सानन्दगद्गदम्*)

जय सर्वलोकमातर्जय कामेशाङ्कगे जय त्रिपुरे ।
जय करुणावशहृदये जय ललिताम्ब प्रसीद शिशवे मे ॥२४॥

(दण्डकः[8])

---

१. क ख दया° । २. ख इति त्वरितमुप° । ३. ख °विकीर्य रत्नानि ।
४. क पुस्तके सर्वार्थसाधिकाया वाक्यमिदं नास्ति । ५. ख स एष ।
६. क °लोकयते, ख पुस्तके 'इति सर्वार्थसाधिकामवलोकते' इति नास्ति ।
७. ख वत्साः । ८. 'दण्डकः' इति ख ग्रन्थमात्रे लिखितम् ।

जय जय जगदम्ब दीनावलम्बानुकूले कदम्बाटवीवासलोलेऽतिलोलम्बकेशि क्षपानाथबिम्बाभवक्त्रे मृगीलोलनेत्रेऽम्बिके बिम्बहृद्याधरे कम्बुवत्कन्धरे कुम्भिकुम्भोपमोरोजकुम्भे हृतोद्वृत्तदम्भे लताडम्बरद्रोहिबाहे मृगाधीशवाहेऽवलग्नोपमेयाम्बरे मातरागुल्म-(ल्फ) संलम्बि[1]शोणाम्बरे हेमरम्भामदारम्भसंस्तम्भ[2]नोज्जृम्भितोरुद्वयि त्र्यम्बकाम्भोजनेत्रस्वयम्भूमुखस्वर्गिसंराद्धपादाम्बुजाते नितान्ताभिजाते समुद्यत्सहस्रांशुकोटीविडम्बार्हदेहप्रभारुण्यपूरोदये कन्धरादघ्ननिर्विघ्नपुष्यद्द्ये रागरूपेण पाशेन रोषात्मकेनांशुकेनापि चेतोमयेनेक्षुचापेन पुष्पैः शरैः पञ्चतन्मात्रसारैः करेष्वञ्चिते ॥१॥

परिचितनवयौवने देवि कामेशवामाङ्कगे पञ्चमूर्त्यात्मकं मञ्चमध्यासिते सुस्थिते मेरुशृङ्गस्थलस्थास्नुना तुङ्गतुङ्गेन रत्नप्रभाविस्फुरद्गोपुरेणोच्चकैः श्रीपुरेणाभितो वेष्टितं[3] चारुचिन्तामणीसद्म पद्माटवीहृद्यमासाद्य सम्मोदमानेऽसमाने नवावृत्युपेतं दृगानन्दनं स्यन्दनं चक्रराजात्मकं भेजुषीभिर्मनोदेवताद्याभिरत्राणिमान्ताभिराराधिते शक्तिभिर्भक्तिनम्रात्मभिर्मन्त्रिणीमन्त्रदत्तावधाने तथा दण्डनाथासमायत्त[4]सैनाधिपत्ये ससम्पत्करी वाजिरूढा निरूढद्विपाश्वाधिकारे सदा निर्विकारे लसल्लीलया बालयाऽऽनन्दिते वन्दिते[5] योगिभिः सेव्यमाने गिरा च श्रिया पार्श्वयोर्दण्डितोद्दण्डभण्डासुरे भासुरे भूषणैः ॥२॥

निरवधिमहिमाद्भुते चिन्मयि श्रीशिवे मन्मथोऽहं कियान्नाम सामादिभिः संस्तुते यत्प्रसूनैर्मितैः सायकैर्धन्वना नन्वनायासनम्येन

---

१. ख °गुल्फसं° 'इति लिखति । २. क ख °विस्टम्भ° । ३. क ख गर्भितं । ४. क °मायात° । ५. 'वन्दिते' इति मू० पु० नास्ति ।

मौर्व्या च निर्व्याजशैथिल्यया स्पन्दमानेन मन्दं बत स्यन्दनेनाबलाधिक्यभाजा बलेन द्विमासात्मकोन्मेषयोग्येन सामन्तभाग्येन मित्रेण च ह्रासपात्रेण सम्मोहये विश्वमेतत्परिभ्रंशयेऽसंशयं योगिनो यच्च वा योगतो भोगतोषं निनायापि यत्फालनेत्रं सुदुर्लङ्घमायाशताडम्बरं शम्बरं यज्जघानाधुना यत्पुनस्तुङ्गमासादयं मङ्गलञ्चेदृशं सस्वभावप्रसर्पत्कृपाद्वीपिनीपूरकल्लोलभङ्गीजुषां तावकापाङ्गभासां म[?]ि स्वैरमुल्लासलीलानुभावो न किम् ॥३॥

शरणमुपगतस्तवायं जनो दासदासो निजाविद्यया विद्यमानान्यया मोहितो नो हितं वेद, वेदान्तवेद्ये मुहुर्गर्भवासादिभिर्निर्भरैर्दुःखभारैः पराभूयते पुत्रभार्यापशुक्षेत्रमित्रादिभाजा ममत्वेन तत्त्वातिगे दूयते हन्त दग्धोदरस्यास्य हेतोस्तटि(डि)ल्लोलयाऽपि श्रिया लब्धयाऽखर्वगर्वानलानीश्वरान् शश्वदासेवमानो भृशं क्लिश्यते तृष्णयाऽत्युष्णचेताः सदा पर्यटाट्यापरो दिक्षु विक्षिप्यमाणोऽरिभिश्चान्तरैर्बालदूर्वाग्रखेलत्तुषाराम्बुलेशांशवद् भङ्गुरं न स्मरन् पङ्गुरन्धो यथा यापयत्येवमायुर्मुधा; सर्वथा तावदेनं महाराज्ञि संयोजय श्रेयसा[1]भूयसा सप्रसादं नमस्ते नमस्ते समस्तेहितप्रापिके ॥४॥

पुष्पेण बाणवत्यै पुण्ड्राख्येनेक्षुणा[2] धनुष्मत्यै ।
पुररिपुणा पतिवत्यै पुत्रिण्यै स्यान्मया नमो मात्रे[3] ॥२५॥

वतंसितमजादिभिर्जननि ते पदाब्जं विना
मितम्पचमुपाश्रये क इव हन्त देवान्तरम् ।
जरामरणघस्मरे सति सुधारसे सन्निधौ
जनः किमविचक्षणोऽप्यविमरीसमास्वादयेत् ॥२६॥

---

१. 'श्रेयसा' इति मू० प्र० पा० । २. क °णेपुणा । ३. ख स्यान्नमो मया मात्रे ।

( इति स्तुत्वा पुनः प्रणमति )

*देवी* — ( *सानुग्रहम्* ) वत्स, किमाशास्यं तव !

*मन्मथः* — अम्ब, इदमेव । ( *इत्यर्धोक्ते प्रमोदपारवश्यं नाटयित्वा, सरोमाञ्चगद्गदम्* )

ऐन्दव्या कलयाञ्चितं कचभरे मन्दस्मितालङ्कृतं
वक्त्रे सान्द्रदयं हृदि स्तनतटे तुङ्गं नितम्बे ततम् ।
पादाब्जे मृदुलं सशोणवसनं बन्धूकबन्धुप्रभं
रूपं तावकमम्ब मङ्गलमिदं मे सन्निधत्तां सदा ॥२७॥

*देवी* — वत्स, अत्रैव मम सन्निहितमावरणमधि[1]ष्ठाय स्वनियोगमशून्यं कुरु ।

*मन्मथः* — ( *सानन्दबाष्पम्* ) अम्ब, श्रेयसामतिभूमिं गमितोऽस्मि ।

*देवी* — वत्स, किं ते भूयः प्रियमादिशामि ?

*मन्मथः* — ( *सप्रणामम्*[2] )अम्ब, किमितोऽपि प्रियतरमस्ति मे ।

फालाक्षोऽपि वशीकृतो ननु मया मातर्यदेभिः शरै-
र्मायावी स च शम्बरो यदवशान्मध्येरणं शायितः ।
एकां प्रार्थयता रतिं यदपरा लब्धा च मायावती
त्वत्सान्निध्यजुषोऽपि[3] तन्मम किमाशास्यान्तरं वर्तते ॥२८॥

तथापीदमस्तु,

---

१. क देवी-वत्सा, चिन्तामणिमन्दिरालङ्कारभूतां शृङ्गारपरिखामधि°, ख देवी-वत्सा, अत्रैव, मन्मन्दिरसन्निहितां शृङ्गारपरिखामधि° ।
२. ख °नन्दबाष्पम् । ३. ख °षोऽद्य ।

( *भरतवाक्यम्* )

मोदन्तां हतशात्रवाश्चिरतरं धात्रीश्वरा धार्मिकाः
स्वैरोन्मीलितसस्यजातसुभगं वर्षन्तु धाराधराः[1] ।
वीरो[2]दारसुधीगृहेषु विहृतिं बध्नातु पद्मालया
चातुर्वर्ण्यमपि स्वधर्मनिरतं नित्योत्सवैरेधताम् ॥२९॥

( *इति निष्क्रान्ताः सर्वे* )

इति जगन्नाथपण्डितकृतौ रतिमन्मथनाम्नि
नाटके पञ्चमोऽङ्कः समाप्तः[3] ॥



१. ख वर्षाम्बुदाः । २. ख धीरो° । ३. इतः परं मू० प्र० लिखति-सम्पूर्णमिदं नाटकम्, श्रीदेव्यर्पणमस्तु, श्रीरस्तु । अस्तु श्रीः । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।

क—°मन्मथे नाटके पञ्चमोऽङ्कः ।
सम्पूर्णमिदं नाटकम् । श्रीरामचन्द्राय नमः । श्रीगुरुभ्यो नमः । श्रीः । श्रीवेदव्यासाय नमः । श्रियै नमः । श्रीरस्तु ।
युवाभिधाने शरदि शरत्कार्तिकशुक्लतृतीयायां भृगुवारे तु लिखितं पुस्तकं त्विदम् ।।
वादरारायणगोत्रोत्पन्नस्य जिवाजिपन्तस्येदम् । श्रीकृष्णार्पणमस्तु । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।।
तैलाद्रक्ष जलाद्रक्ष रक्ष मां परहस्ततः । मूर्खहस्ते न दातव्यमेवं वदति पुस्तकम् ।।

ख—सम्पूर्णमिदं नाटकम् । गुरुदेवताचरणारविन्दयोरुपहारीभवतु । श्रीरामो विजयते ।
[एतदनन्तरमुपलब्धे पृष्ठत्रये स्तुतिमिमां मदालसावृत्तेन लिखति]

## प्रथमं परिशिष्टम्

[ख—ग्रन्थस्यान्ते खण्डितं स्त्रोत्रमिदं लिखितं वर्तते। एतदपि रतिमन्मथनाटकान्तर्गतमिति पार्श्वगतेन र० म० इति निर्देशोनावगम्यते। मन्ये जगन्नाथपण्डितस्यैवेदं स्यात्]

अङ्कादति क्षितिजमङ्कानभिज्ञशशिशङ्काकरास्यसुपमम्
लङ्कारिचापमनु लङ्काशरक्षतजपङ्कावरूपितशरम्।
त्वं कामदं विहितरङ्काचनं दनुजकङ्काललनोदिनमना-
तङ्काय वत्स भज तं कालमेवरुगहङ्कारहारिवपुषम् ॥१॥

मा गा मनस्त्वमनुरागातिभूमिमुपभोगानवाप्तुमनसा
नागारदारसुतयोगा न किं बत वियोगात्मकाः परिपा(ण)तौ।
यागादिजन्यपरिभागात्मविग्रहविभागार्हशैलतनयं
वेगादुपास्व भवरोगापहं विधृतनागाजिनं पुररिपुम् ॥२॥

वाचा मरन्दमधुमोचासुधामधुरिमाचामदक्षरसया
हा चापलान्नरपिशाचानुपासितुमनाचार किं नु यतसे।
काचाय मा विनट सा चापदत्र न सु(मु)मोचाग्रिमा कमपि त-
त्प्राचामुपास्यमभियाचापवर्गसुखमाचार्यमाश्रितवटम् ॥३॥

खञ्जायितोधिमतिगञ्जापरोपि बत सञ्जायतेऽन्नधनदः
संजाघटीति गुणपुञ्जायितस्य तु नु गुञ्जामितं च कनकम्।
किं जाग्रती जयसि न जानती स्वपिषि शिञ्जानन्नूपुरपदे
तञ्जापुरेशि नवकञ्जाक्षिसाधु तदिदं जातु वा किमु शिवे ॥४॥

आटीकसेऽङ्ककरिघोटीपदातिजुषवाटीभुवि क्षितिभुजां
चेटीभवंस्तदपि शाटी न ते वपुषि वीटी न चाधिवदनम् ।
कोटीररत्नपरिपाटीभृशारुणितजूटीविधुं तनुलस-
त्पाटीरलिप्तिमिभधाटीजुषं सुरवधूटीनुतां भज शिवाम् ।।५।।

पण्डावदग्रिमपिचण्डावपूर्तिमनु रण्डाविधेयकुटिलो-
द्दण्डाविवेकधरिचण्डालगेहभुवि दण्डाहर्तिं किमयसे ।
खण्डामृतद्युतिशिखण्डामुपास्व सुरखण्डार्चितांघ्रिकमलां
भण्डासुरद्रुहमचण्डात्मिकां चितिमखण्डात्मरूपसुखदाम् ।।६।।

गाढा त्वया सपदि राढापुरीवसुनि बाढानबध्ररतिना
सोढा तथा तपनगाढातपप्रसररूढातिवृष्टिविततिः ।
मूढापि किं फलमगूढाजरेव शिरसोढा कुतो न विनुतो
द्रोढाऽतनोर्जनितषोढामुखः समिति वोढा सहाटकगिरेः ।।७।।

दन्तावलाश्वभृति चिन्तापरोऽसि बत किं तावता वद फलं
हन्तताखिलं क्वचन गन्ता तदेतदथ सन्तापमञ्चसि परम् ।
त्वं तात भावय दुरन्तारमाऽनवरतं तामसः स्वपिहि मास''''

# द्वितीयं परिशिष्टम्

## (टिप्पण्यः)

१।१ स्वेष्टदेवतारूपायाः सिंहासनेश्वर्याः श्रीदेव्याः कटाक्षाङ्कुराणां जगत्कल्याणकारित्वाभिधानरूपे मङ्गलाचरणपद्येऽस्मिन् नानाभावानामेकत्राभिहितत्वेन भावशबलताया आस्वादो भवति। अत्रैव 'वात्सल्यप्रचुराः प्रसूनविशिखे रत्यां प्रसादोत्तराः' इत्यभिदधानेन कविना स्वकीये रतिमन्मथनाम्नि नाटके यदभिधेयं तदपि सूचितम्।

पृ० ४ सूत्रधारस्य वचनम्–'इयमेव महतां शैली, यदन्यदीयस्य गुणपरमाणोरपि पर्वतीकरणम्'। वाक्यमिदं श्रीजयदेवस्य 'प्रसन्नराघवस्थं पद्यार्धमिदं स्मारयति—

'परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः।'

पृ० ७, विदूषकस्य वचनम्। यथा बधिरस्य कस्यचित् कर्णे कथितं वचनं व्यर्थमिव सञ्जायते, तथा मदुक्तं नानेन श्रुतमिति निदर्शना। अत्रैव 'किं रण्णचन्द्रिका मह झरइ' इति प्राकृतवाक्यस्य संस्कृतं 'किमरण्यचन्द्रिका महः क्षरति' इति छायायामेवमर्थोऽभिहितो भवति—अरण्ये चन्द्रिकाया महसः क्षरणेन यथा न कश्चन लाभः, तथा तव पुरः किञ्चित् कथनमनाकर्णयति त्वयि निष्फलमेव। अथ वा, 'मह' इत्यस्य 'मम' इति छायायां सत्यां 'मम' कृते अरण्यचन्द्रिका क्षरति, अर्थात् व्यर्थमहमालपामि, तव ध्यानं क्वचिदन्यत्र वर्तत इति।

पृ० १५ तदेनं (कीरं) सुहितं करोमि—सुहितं सन्तुष्टमित्यर्थः। सुहितस्य भावः सौहित्यम्, पूर्तिरित्यर्थः। 'सौहित्यस्य' प्रयोगो माघकाव्ये (५।६२) लभ्यते। पर्याप्तिमुपसम्पन्नं पूर्तिः सौहित्यमुच्यते' इति हलायुधः। पृ० २४ इत्यत्रापि '...मया विस्मृत-एतस्य कीरस्य सौहित्यविधिः'। ३५ पृष्ठेऽपि।

पृ० १७'...आभिश्च वाचं मिश्रयितुम्'—अयमंशोऽभिज्ञानशाकुन्तलस्य पद्यांशमिमं स्मारयति—

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यवहिता मयि भाषमाणे। १।२८

पृ० १८, १।२५ उपघ्नः आश्रयतरुरित्यर्थः ।

पृ० २४ "निर्व्याजवत्सला तावदस्मासु भगवती परदेवतायाश्चतुर्थावरणदेवता सर्वार्थसाधिका ।" आवरणदेवता = अङ्गदेवता ।

पृ० २७; २।२ पाञ्चालीविहृतिः—'गुड्डा-गुड़िया' इत्यभिधेयं बालिकानां क्रीडनकम् ।

पृ० २८ मयूरिकाया वचनम्-अनभिज्ञाऽसि लोकव्यवहारस्य, वरपक्षीयैरेव वधूप्रार्थना श्लाघनीयेति । अद्यत्वे लोकव्यवहारो भिन्न एव दृश्यतेऽस्माकं देशे । वधूपक्षीयैरेव प्रायः सर्वत्र वरप्रार्थना क्रियत इदानीम् । परन्तु यत्र कुत्राप्यद्यत्वेऽपि (यथा, पर्वतीयेषु) वरपक्षीया एव वरप्रार्थनां कुर्वन्ति । भगवता शिवेनापि सप्तर्षयः 'तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः' (कुमा० ६।२९) इत्युक्त्वा पार्वत्यर्थं हिमालयं प्रति प्रेषिताः । हिमालयस्य पक्षेणापि वचनं कुमारसम्भवगतं ( १।५२ ) पद्यमिदं प्रसङ्गेऽस्मिन्नाकलनीयम्—

अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ।
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ।।

पृ० ३४ "हला, किमद्वैतमतानुप्रवेशिन्यौ युवां यत् प्रत्यक्षदृश्यमानमपि असन्तं कथयथः ?" वाक्येऽस्मिन्नद्वैतमतस्योल्लेखः । अद्वैतमते हि रज्जावहिरिव प्रत्यक्षं दृश्यमानं ब्रह्मण्यधिष्ठाने अध्यस्तं जगत् असत् इति प्रतीयत इति पक्षः स्वीक्रियते । अयमेव कवेः श्रीजगन्नाथपण्डितस्यापि सिद्धान्तः, यस्य यत्र तत्रानुस्करति ।

पृ० ३५ सख्योर्वचने 'पडिल्लंद' इत्यस्य 'प्रतिच्छन्द' इति संस्कृतच्छाया । चित्रमित्यर्थः ।

पृ० ३८ विदूषकस्य वचनम्—'अनुराग एव खलु वस्तुनः सौन्दर्यं सम्पादयति' इत्यत्र कश्चिदाक्षेपः परिलक्ष्यते, तथा हि, न खलु सा रतिः सहजसौन्दर्यशालिनी, परं तद्गतस्त्वदीयोऽनुराग एव त्वां तस्यामसुन्दर्यामपि सुन्दरीयमिति त्वां वक्तुमनुव्यवसाययति । तमिममेवाक्षेपं निराकुर्वन् मन्मथोऽभिधत्ते—'मा तावत् । सहजसुभगायास्तस्याः' इति ।

[ सौन्दर्यं नाम किमपि वस्तुगतं तत्त्वमथवाऽऽत्मगतमिति, अद्यावधि सौन्दर्य-शास्त्रज्ञा नैव निर्धारयितुमशक्नुवन्, यथा च रैवतकवर्णनप्रसङ्गे महाकविर्माघः—

'दृष्टोऽपि शैलः स मुहुर्मुरारेरपूर्ववद् विस्मयमाततान ।
क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ॥'

इति, तदेतत् सर्वथा सौन्दर्यस्य वस्तुगतत्वमेव द्रढीयो विधत्ते । एवञ्च,

मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिमिहोच्यते ॥

इति कस्यचिद्वचनमपि प्रथमस्यैव पक्षस्य समर्थकम् । परं, विदूषकस्य वचनं सर्वथा सौन्दर्यस्यात्मगतत्वमेव प्रतिपादयति । क्वचिदस्माभिः पारसीकसाहित्ये लैलाना-म्न्यां सौन्दर्यरहिताया मजनूनाम्नो नायकस्यात्यासक्तिमवलोक्य कस्यचित्प्रश्नस्योत्तर-रूपेण मजनूनाम्नो नायकस्यैतदभिधानमपि विदूषकस्य वचनमिदं द्रढयति—'मदीयया दृशा लैलां यदि भवान् पश्येत् तदा तस्याः सौन्दर्यं भवद्भिराकलितं स्यादिति ।]

२१९ गन्धफली-चम्पककुसुमम् । भ्रमराश्चम्पकं न जिघ्रन्तीति प्रसिद्धिः । कस्यापि पद्यमिदम्—

भ्रमन् वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत् ।
सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ॥

(द्र० 'पद्यरचना', ५९३)

पृ० ५६ वसन्तस्य वचनम्—"गृहीतभृतेः किमनतिगताध्वनो वीवधभारनि-र्वेदेन ।" वीवधः—धान्यादिप्राप्तिः । "धान्यादेर्वीवधः प्राप्तिरासारस्तु सुहृद्बलम् । प्रसारस्तृणकाष्ठादेः प्रवेशः" इति वैजयन्ती । येन भृतिर्वेतनं गृहीतम्, अर्थात् यः सेवाकार्यरतः कियदपि च दूरं पन्थानं गतः सन् धान्यप्राप्तिभारनिर्वेदस्तस्य कृते व्यर्थः । तेन यथाङ्गीकृतं निर्वाह्यम् । अत एवाग्रे मन्मथो वदति—'इदमिदानीमवश्यनिर्वोढव्य-मापतितम् ।'

पृ० ५६ 'औपयिकस्तावदनयोरन्योन्यव्यतिकरः ।' औपयिकः—उचित इत्यर्थः । व्यतिकरः—सम्बन्धः, परिचयः ।

पृ० ७३, ३।१८ हल्लीसकक्रीडितम्—Dance in a ring.

पृ० ९८ शम्बरस्य वचनम्—एवं किल कुलिङ्गविहङ्गभङ्गीमनुसरति कुलिङ्ग इत्यनेन चटकाख्यः 'गौरैया' इति जनसामान्ये प्रसिद्धः पक्षी । लौकिकन्यायेषु 'भूलिङ्गशकुनिन्यायः' प्रसिद्धः, तत्र 'भुवनेशलौकिकन्यायसाहस्र्यां' टिप्पणीयमुपलभ्यते—'हिमाचलप्रान्तदेशे भूलिङ्गाख्यः पक्षी—मा साहसं कुर्विति पुनः पुनरुच्चैर्वदन् सिंहदंष्ट्राग्रलग्नं मांसं जिघृक्षतीति प्रसिद्धम्, तथा परोपदेशमात्रकुशलः स्वयञ्च यथेष्टाचरणशीलो दाम्भिकस्त्याज्य एवेति भावः । उक्तञ्च महाभारते—'न गाथा गाथिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा ।' 'कु' शब्दः भुवः पृथिव्याः पर्यायेषु प्रसिद्धः । अत एव कुलिङ्गभूलिङ्गयोर्नार्थान्तिरम् । महाभारतस्य सभापर्वणि (४५।१८) निर्दिष्टपद्यानन्तरं कतिपयपद्येषु भूलिङ्गशकुनेः स्पष्टीकरणमुपलभ्यते—

अथ चैषां न ते बुद्धिः प्रकृतिं याति भारत ।
मयैव कथितं पूर्वं भूलिङ्गशकुनिर्यथा ।।
भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे ।
भीष्म तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः ।।
मा साहसमितीदं सा सततं वाशते किल ।
साहसं चात्मनाऽतीव चरन्ती नावबुद्ध्यते ॥
सा हि मांसार्गलं भीष्म मुखात्सिंहस्य खादतः ।
दन्तान्तरविलग्नं यत् तदादत्तेऽल्पचेतना ।।
इच्छतः सा हि सिंहस्य भीष्म जीवत्यसंशयम् ।
तद्वत् त्वमप्यधर्मिष्ठ सदा वाचः प्रभाषसे ।।
इच्छतां भूमिपालानां भीष्म जीवस्यसंशयम् ।
लोकविद्विष्टकर्मा हि नान्योऽस्ति भवता समः ।।''
४४।२७-३२ (गीताप्रेस गोरखपुर सं०)

पृ० १०८, ४।४४ युगपदुपात्तेति । पद्येऽस्मिन् छन्दोमञ्जर्यनुसारं 'नर्दटकं' नाम छन्दः प्रयुक्तं कविना । तस्येदं लक्षणम्—

'यदि भवतो नजौ भजजला गुरु नर्दटकम् ।'

पृ० ११९ मायावत्या वचनम्—अस्मिन् वृषपर्वणः पुत्र्याः शर्म्मिष्ठाया उल्लेखो महाभारतादिषु लब्धायास्तदीयायाः कथायाः स्मारको वर्तते । शुक्राचार्यस्य पुत्र्या देवयान्या दासीत्वं प्राप्तायाः शर्म्मिष्ठाया अप्यासक्तिर्ययातावासीत् । कथेयं महाभारतस्यादिपर्वणि श्रीमद्भागवतस्य नवमस्कन्धे (१८ तमाध्याये) चानुसन्धेया । अभिज्ञानशाङ्कुन्तलेऽस्यापि पद्यमिदमाकलनीयम्—'ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।' (४।७)

५।२६ अविमरीसम्=अवेः मेष्याः, मरीसं मांसमित्यर्थः ।

●●

## तृतीयं परिशिष्टम्

( पद्यानुक्रमणिका )

●●●

## शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| संमानथिष्यामि | संमानयिष्यमि | ६ | ८ |
| अगुराओ | अणुराओ | १३ | १४ |
| रस लाव | रसालाव | १४ | २१ |
| म मथ | मन्मथ | १७, १११ | ८, १० |
| इत्यनिछन्त्येव | इत्यनिच्छन्त्येव | २३ | २१ |
| एकः | एका | २६ | ३ |
| विश्रारेण | विचारेण | २८ | १८ |
| दशने | दर्शने | ३६ | २० |
| (वतुरा ?) | तरुणी | ३९ | २ |
| तदात्मनः | तमात्मनः | ३९ | ९ |
| विहस्थो | विहस्तो | ५१ | ११ |
| यितरसा | यितरया | ६४ | ८ |
| खेटरपि | खेटैरपि | ६९ | १४ |
| कुरविन्द | कुरुविन्द | ७१ | १३ |
| न्नेत्रर | न्नेत्रार | ७३ | ४ |
| कुर्वन्नुर्वी | कुर्वन्नुर्वीं | ७४ | ३ |
| महेन्द्रः | महेन्द्र | ७४ | ६ |
| पुन | पुनः | ७५ | ५ |
| सोऽपशदः | सोऽपसदः | ८२ | १३ |
| मपशदः | मपसदः | ८४ | १३ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| रापशदः | रापसदः | ८९ | १० |
| पूर्वं देवापशदेन | पूर्वदेवापसदेन | ९५ | २ |
| सकरुणास्त्रम् | सकरुणास्रम् | ९५ | ५ |
| तानेता | तानेतान् | ९६ | १० |
| साशिरः | सशिरः | १०० | ३ |
| गजाश्वश्वदैत्य | गजाश्वदैत्य | १०३ | ६ |
| वितक | सवितर्कं | ११५ | ८ |
| कृतमाश्रित्य | संस्कृतमाश्रित्य | ११६ | १ |
| श्रियवतो | श्रितवतो | ११९ | १३ |
| गदम्बा | जगदम्बा | १२७ | १३ |